# प्रौढमनोरमा

## शब्दरत्न–भैरवी–भावप्रकाश–सरलाटीकाचतुष्टयसहिता।

श्रीयुत पं० वैद्यनाथ बालंभट्टपायगुण्डेजीकृत भावप्रकाश के साथ इस ग्रन्थ को प्राप्त करने की आप लोगों की महत अभिलाषा को देख कर ही यह नवीन संस्करण प्रकाशित किया गया है। काशी के प्रसिद्ध विद्वान् श्रीमान् पं० गोपाल-शास्त्री नेने जी कृत सरला टीका साथ में होने से तो इस ग्रन्थ की उपयोगिता और भी बढ़ गई है। अव्ययीभावान्त १०)

# लघुशब्देन्दुकला

## [ लघुशब्देन्दुशेखर–प्रश्नोत्तरी ]

इसमें परीक्षामें आने योग्य सभी प्रश्नोंके उत्तर ऐसे सरल तथा निर्दुष्ट परिष्कारों से युक्त लिखे गये हैं कि अभ्यास करलेने पर विद्यार्थी परीक्षामें पूरी सफलता प्राप्त कर लेंगें तथा ग्रन्थ लगाने में भी विद्यार्थीको अत्यधिक सहायता मिलेगी। ऐसा प्रशंसनीय संस्करण यह प्रथम बार ही प्रकाशित हुआ है। १।)

# परमलघुकला

## ( परमलघुमञ्जूषा प्रश्नोत्तरी )

प्रस्तुत संस्करण में परीक्षा में आने योग्य सभी प्रश्नों के उत्तर ऐसे सरल तथा निर्दुष्ट परिष्कारों से युक्त लिख दिये गये हैं कि–"एक पन्थ दो काज" याने ग्रन्थ लगाने में भी इस से आपको अत्यधिक सहायता पहुँचेगी और कण्ठस्थ कर लेनेपर परीक्षा में अधिक से अधिक नम्बर भी पासकेंगें। १)

# परिभाषेन्दुशेखरः

## 'बृहच्छास्त्रार्थकला' टीका. प्रश्नोत्तरी तथा नाना परिष्कारादि संवलित बृहत्परिशिष्टों से विभूषित।

विजया, भूति आदि ख्याति प्राप्त सभी टीकाएँ इसमें गतार्थ हो चुकी हैं। बहुत से दुष्प्राप्य कोड–पत्रों को संकलित कर के पूर्व प्रकाशित उन सभी टीकाओं के गुण–दोषों की समालोचना करके प्रस्तुत संस्करण प्रकाशित किया गया है ३)

**सिद्धान्तकौमुदी**–पं० गोपालशास्त्री नेने कृत परीक्षोपयोगी 'सरला' टीका तथा रूपलखन प्रकार– पंक्तिलेखनप्रकार आदि परीक्षोपयोगी विविध परिशिष्ट सहित अव्ययान्त १।।) कारकान्त २)

प्राप्तिस्थानम्–चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी।

॥ श्रीः ॥

-※ हरिदास-संस्कृत-ग्रन्थमाला ※-

५४

# MANORAMĀ S'ABDARATNA PRAS'NOTTARĀVALĪ

※ श्रीः ※

# मनोरमाशब्दरत्न-प्रश्नोत्तरावली

[ प्रथमखण्डः ]

वैयाकरणशिरोमणिशुक्लश्रीवेणीमाधवशास्त्रिणामात्मजेन

शुक्ल श्रीराजनारायणशास्त्रिणा

सङ्कलितः, सम्पादितश्च

प्रकाशकः

जयकृष्णदास हरिदास गुप्तः,

चौखम्बा संस्कृत सीरिज आफिस

बनारस सिटी ।

द्वितीयावृत्तिः ]  मूल्य ॥=)  [ १९४८ ई०

श्रीगणेशाय नमः ।

# मनोरमाशब्दरत्नप्रश्नोत्तरावली

ध्यात्वा श्रीशपदारविन्दयुगलं नत्वा श्रियं सुन्दरीम्,
पित्रोः पादयुगं प्रणम्य मनसा वाचा तथा कर्मणा ।
ध्यायन्ध्यायमहर्निशं घृतवतस्तेजस्तु बार्हस्पतम्,
प्रातः स्मर्यपदान् गुरून् मयि सदा यावद्दयाशालिनः ॥१॥
यावच्छब्दमधीत्य तर्कितरुचाः प्रोत्साहितस्सज्जनैः,
वेणीमाधवशास्त्रिणो भुवि यशः प्रख्यातनाम्नस्सुतः ।
लेखन्दैक्षितमीहते सरलतापूर्णन्तु पारीक्षिकम्,
शुक्लो गर्गकुलप्रसूतसुधीः श्रीराजनारायणः ॥ २ ॥
परीक्षापाशबद्धानां छात्राणां हितकाम्यया ।
कुर्वे मनोरमाशब्दरत्नप्रश्नोत्तरावलीम् ॥ ३ ॥

## अथ प्रश्नाः

१—पूर्वत्रासिद्धमित्यस्याधिकारत्वास्वीकारे यद् दूषणं शब्दरत्नकृता दत्तं तदुपपाद्य कार्यासिद्धशास्त्रासिद्धत्वयोर्गुणदोषौ विविच्य वाच्यौ ।

२—न पदान्तेति सूत्रे सवर्णानुस्वारयोश्चोदाहरणं शब्दरत्नकृदुपदर्शितविशेषगर्भं व्युत्पाद्यताम् ।

३—यणः प्रतिषेधो वाच्य इति वार्त्तिकस्य विषये कः फलभेदः प्राप्नोति कथञ्च तदुद्धारः इति निरूप्य गौरववचनं स्वरसिद्ध्यर्थमिति स्वरभेदशङ्कोपपाद्यतां निराक्रियताञ्च ।

४—सम्बुद्धौ शाकल्यस्येति सूत्रे परत्वाद् विकल्पो माभूदित्यादिना सन्दर्भेण दीक्षितेन यदुक्तं शब्दरत्नकृता च तत्सर्वं व्यक्तं निरूप्यताम् ।

५—अर्थवद्ग्रहणपरिभाषायां राज्ञः पृथग् ग्राजग्रहणस्य ग्राप-

प्रत्याहार इत्यत्र शब्दरत्ने किंज्ञापकमुक्तम् तत्सम्यगुपपादय ।

२०—नपदान्तेति सूत्रे शिण्ढीत्यस्य सवर्णोदाहरणत्वे कानुपपत्ति-रुद्भाविता शब्दरत्ने किञ्च तस्यालाभ्रगणत्फलम् ।

२१—सम्बुद्धौ शाकल्यस्येति सूत्रे सम्बुद्धिग्रहणस्य किम्फलं कथ-ञ्च शब्दरत्नकृता खण्डितं वस्तुतः किन्तत्फलन्तद् वद ।

२२—हृदुदुपधेत्यस्यार्थे प्राङ्नव्यरीत्या स विशेषं प्रमाणं वद ।

२३—ढलोप इति सूत्रे अणः किम् ढ्ढ इति प्राचीनोक्तं च पठय ।

२४—उपदेशे करणव्युत्पत्तिमाश्रित्य शास्त्रमुपदेश इतिव्याख्या-नस्य प्रौढिवादत्वं कथम्मूलकारेण प्रतिपादितम् शब्दरत्ने च को विशे-षः इति सविस्तरं ब्रूत ।

२५—इको गुणवृद्धी इति सूत्रे तच्छेषपदे किन्दूषणं कथञ्च तदुद्धारः ।

२६—सवर्णविधौ न स्थानिवदित्यस्योक्तं शिण्ढीत्युदाहरणञ्च दूष-यित्वा शब्दरत्नीयमुदाहरणं वदत ।

२७—एकः पूर्वपरयोः इति सूत्रे भाष्ये लक्ष्येलक्षणन्यायः कथ सिद्धान्तितः तत्र प्राचीनोक्तं ज्ञापकं निराकृत्य तल्लक्ष्यत्वञ्च किमिति सविस्तरं ब्रूत ।

२८—परमदण्डिनावित्यत्र ङमुडभावो मूलकृता कथमुक्तष्टीका-कृता चात्र किमुक्तन्तयोर्युक्तायुक्तत्वे सयुक्ति लेख्ये ।

२९—भो भगो अघो इति निपातैरेवोपपत्तौ अनन्यथासिद्धानि प्रजोजनानि कानीति सविस्तरम् वद ।

३०—अणुदित्सूत्रे परेण णकारेणाणप्रत्याहारग्रहणे सोपपत्तिकं प्रमाणमुपपादय ।

३१—तस्मिन्निति सूत्रार्थे प्राचीननवीनमते उपपाद्य तयोर्युक्तायु-क्तत्वे निरूप्येताम् ।

३२—सवर्णानुस्वारयोः किमुदाहरणं किञ्च शब्दरत्नकृतोक्तम् ।

३३—परमदण्डिनावित्यत्र ङमुडभावो मूलकृता कथमुक्तः टीका-कृता च यद्दिस्त्वित्यादिना किमुक्तम् कार्यित्वनिवेशेऽनन्यथासिद्धमुदाह-रणमस्ति न वेति विविच्यताम् ।

४७—तस्यादित इति सूत्रे ह्रस्वपदस्य कथमविवक्षितत्वम् इति लिख्यताम् ।

४८—यौगपद्ये उपदेशताप्रयोजकेत्यादि स्वपरग्रन्थविरोधो न संज्ञापद्ये अत्र का वाच्या युक्तिः ।

४९—एत्येधत्यूठ्सु इत्यत्रावधानपूर्वकम्माधवो दूष्यताम् ।

५०—वार्त्तिकनिष्पन्नैरेव गतार्थतायाम् निपातान् ओसादीन् सफलय ।

५१—आदिरन्त्येनेत्यत्र स्वशब्दानुवृत्तिं विफलय ।

५२—एकःपूर्वपरयोरितिसूत्रकारीयपूर्वपक्षसिद्धान्तयोः कथं लक्ष्ये लक्षणन्यायसिद्धिः ।

५३—अदो इति अत्र परत्वाद् विकल्पो माभूत् इति प्रतीकोपरि शब्दरत्नकृता यदुक्तन्तल्लिख ।

५४—परमदण्डिनावित्यत्र ङमुटं वारयितुम् मतद्वयमुपन्यस्य तयोः कतरद् युक्तमिति विवेचय ।

५५—तस्यादित इत्यत्र ह्रस्वपदस्याविवक्षितत्वे प्रमाणं लिख ।

५६—धात्वङ्गेति प्राचीनोक्तं दूषयताऽनल्विधावित्यस्यार्थः सविस्तरं निरूप्यताम् ।

५७—अङ्गेति सूत्रे विध्यधिकारयोर्द्वैतता समुपपाद्यताम् ।

५८—इदुदुपधेति सूत्रं व्याख्यायताम् ।

५९—नपदान्तसूत्रे सवर्णानुस्वारफलं प्राचोक्तं दूषयता शब्दरत्नफलं लिख्यताम् ।

६०—रूपग्रहणं चिन्त्यप्रयोजनमुपादाय शब्दरत्नकृता यदुक्तं तल्लिख ।

६१—व्यपदेशिवद्भावोऽप्रातिपदिकेनेत्यस्यप्रत्याख्यानमुपपाद्यताम् ।

६२—उपदेशशब्दस्य भावसाधनत्वकरणसाधनत्वयोः साधकबाधकप्रमाणान्युपन्यस्य भाष्यानुसारी निर्दुष्टस्तदर्थो वर्णनीयः ।

६३—नकारजावनुस्वारपञ्चमौ इति कारिका प्रसङ्गोल्लेखपूर्वकं सोदाहरणा व्याख्येया ।

७७—अगिति सूत्रयितुमुचितम् इति ग्रन्थः सावतरणं व्याख्यायताम्।

७८—कविभिः कृतमित्यत्र षत्वाभावं सप्रपञ्चम् प्रदर्शयत।

७९—हलन्त्यमित्यत्रान्योन्याश्रयपरिहाराय दर्शितोपायान् प्रदर्श्य तेषु युक्तपक्षः समर्थ्यताम्।

८०—न पदान्तसूत्रे भावसाधनविधिशब्दोपादानफलप्रदर्शनावसरे "नच प्रत्ययलक्षणाम्" इत्यादिमनोरमाग्रन्थस्य शब्दरत्नकृता स्थानिवत्सूत्रपरत्वेन व्याख्यानं केनाभिप्रायेण कृतमिति विशदमुपपादनीयम्।

८१—अणवक्न्यासयोःसपरिहारं फलभेदं स्पष्टमुपपाद्य वर्णग्रहणविषये प्रतिपदोक्तपरिभाषाप्रवृत्तौ विवदमानयोः प्राङ्नव्ययोर्वैमत्यं सहेतुकमुपपादनीयम्।

८२—एत्येधत्यूठ्सु इतिसूत्रे एचीत्यस्य कुत्रान्वयः कुत्र च नेति मतभेदप्रदर्शनपुरस्सरमविरोधी कश्चन सिद्धान्तस्समर्थनीयः।

८३—धात्रंश इत्यत्र रेफस्य द्वित्वनिषेधचिन्तायां मूलव्याख्ययोः को मतभेदःकस्य च मतं युक्तमिति सयुक्तिकमुपपादनीयम्।

८४—अर्थवद्ग्रहणपरिभाषाया राजेः पृथक् भ्राजेर्ज्ञापकत्वं कथं च ज्ञापनोत्तरम् स्वांशे चारितार्थ्यं विभ्राडितिभ्राशतेरपि सिद्धत्वात्।

८५—सम्पूर्णसूत्रावृत्त्यतिरिक्तान् अन्योन्याश्रयपरिहारोपायान् प्रदर्श्य हलन्त्यमित्यस्यावृत्तिर्मनोरमोक्तरीत्या समर्थनीया।

८६—एत्येधत्यूठ्सु इति सूत्रेऽनुवर्त्तमानमेचीति पदं कुत्रान्वेति कयटमाधवादिमतनिर्देशपुरस्सरं स्वीयवाक्येन विशदमुपपादनीयम् (ग्रन्थानुपूर्वी नावर्त्तनीया)।

८७—पूर्वत्रासिद्धमित्यत्र कार्यासिद्धत्वपक्षे प्रदर्शितान् दोषान् ग्रन्थोक्तरीत्योपपाद्य विध्यधिकारकल्पयोः फलान्यैके नैव कल्पेन साध्यानि।

८८—सवर्णानुस्वारयोर्मूले दत्तमुदाहरणं व्याख्यातृपद्धत्या सारुचिनिर्देशमुपपाद्य युक्तनिर्दोषमोदाहरणम्प्रदर्शनीयम्।

८९—इदुदुपधस्येति सूत्रव्याख्याने विसर्गविधिस्तु पुनरित्यादौ

चरितार्थं इति ग्रन्थव्याख्यावसरे अग्निः पुनः इत्यनयोर्भेदप्रतिपादनपरं रत्नग्रन्थो निपुणं पूर्वं पूर्वग्रन्थेऽरुचिं दर्शयद्भिर्भवद्भिरुपपादनीयः।

१०—हलन्त्यमिति सूत्रे हलित्येकदेशस्यैव तन्त्रादीति पक्षे हलित्य-समाहारद्वन्द्वाश्रयणस्यायुक्तत्वं शब्दरत्नदिशोपपाद्य सह विवक्षापदार्थं परिष्कृत्य दर्शनीयः।

११—पूर्वत्रासिद्धमित्यस्य विधित्वनिरासपुरस्सरम् अधिकारत्वं सम्पाद्यम् ( समर्थनीयम् ) शास्त्रासिद्धत्वकार्यासिद्धत्वयोः कतरद्ग्रन्थकृत्सम्मतं किञ्च तत्र युक्ततरमिति सत्रं सुस्पष्टमुपपाद्यताम्।

१२—लक्ष्ये लक्षणम् इत्यत्र प्रमाणमुपदर्श्य विकारवृ.तलक्ष्यभेदा-नाश्रयणे ज्ञापकमुपवर्ण्य तल्लक्ष्यत्वं निर्दोषपरिष्कर्त्तव्यम्।

१३—अर्थवद्ग्रहणे नानर्थकस्येत्यत्र अर्थवत्सूत्रे ... पृथग् आज्ग्रहणस्य ज्ञापकत्वमभिदधानस्य सीरदेवस्य आज्ग्रहणस्य स्वांशे चारितार्थ्यं दुरुपपादम् दुभ्राश्र दीसावित्यतोऽपि विभ्राडित्यस्य सिद्धेरिति शङ्कां सूक्ष्मदृशा समाधाय सम्बुद्धौ शाकल्यस्येतावनार्षे इति सूत्रे सम्बुद्धिग्रहणप्रयोजनं निरूपणीयम्।

१४—च्याआदेशस्य खशादित्वे प्रयोजनानि निरूप्यान्त्यहरदत्त-माधवादिमतं निरस्य विसर्जनीयस्य सोऽशपरे इति न्यासे दोष उद्भावनीयः। कविभिः कृतमित्यादौ षत्वञ्च वारणीयम्।

१५—व्यपदेशिवद्भावोऽप्रातिपदिकेनेतिपरिभाषायाः शब्दकौस्तु-भदर्शितप्रत्याख्यानप्रकारं उपपाद्य निराक्रियताम्। विभाषा भवद्भग-वदिति वार्त्तिकं प्रत्याख्यातुं शक्यं नवेति सयुक्तिकमुपपाद्यताञ्च।

१६—अमि हकारस्य प्रयोजनमुपपाद्य निरस्य चान्योन्याश्रयवा-रणस्य प्रकारान् ग्रन्थोक्तरीत्या प्रदर्श्य निरस्य च सिद्धान्तपक्षः समर्थनीयः।

१७ धात्रंश इत्यत्र रेफस्य मनोरमोक्तरीत्या द्वित्वाभावमुपपाद्य रत्नोक्तदिशा तं निरस्य तक्रन्यायमाठरकौण्डिन्यन्याययोर्भेदः स्पष्टी-क्रियताम्।

१८—सम्बुद्धौ शाकल्यस्येति सूत्रे सम्बुद्धिग्रहणस्य प्रयोजनं ग्रन्थोक्तरीत्याऽभिधाय तदसाधारणफलन्निरूपय।

९९—पूर्वविप्रावित्यत्र पञ्चमीसमासफलान्यन्यथोपपाद्य रत्नोक्तिदिशा तत्फलं समर्थ्यं तदसाधारणफलमस्ति नवेति विशदमुच्यताम् ।

१००—प्राचीननवीनमते अनुसृत्योपदेशपदार्थौ व्याख्येयः, तयोर्युक्तायुक्तत्वञ्च स्फुटम्प्रतिपाद्यताम् ।

१०१—न पदान्तेति सूत्रे विधिशब्दो भावसाधनः कर्मसाधनो वा, किञ्च लक्ष्यसिद्धौ तयोर्वैषम्यमित्युच्यताम् ।

१०२—धात्रंश इत्यत्र यणो मय इति रेफस्य द्वित्वं भवति नवा? नोचेत् को हेतुर्विशदं व्याख्यायताम् ।

१०३—विसर्गविधिस्तु पुनरित्यादौ चरितार्थं इत्यत्रान्यशब्दस्यान्यथोऽर्थविप्रदर्शनपुरस्सरं स्फुटं स्वकल्पितवाक्येन व्याख्येयः ।

१०४—भो भगो इति सूत्रे निपातानां ग्रहणं वार्त्तिकनिष्पन्नानां वा ? किञ्च तेषांप्रयोजने वैषम्यमिति स्पष्टमुच्यताम् ।

१०५—किन्तावत् समानाङ्गत्वमिति परिष्करणीयम् ।

१०६—कुमति चेति णत्वं चित्रगवीणामिति ग्रन्थस्य किन्तात्पर्यम् ।

१०७—आक्षिप्तपदार्थस्य शाब्दबोधे भानाभावनियमेऽपि "आदिश्यन्त्यन" इत्यत्र कथं बोधः ।

अतः पराणि राजकीयसंस्कृतपरीक्षाप्रश्नपत्राणि कुत्रापि नो प्रकाशितानि नचोपलभ्यन्ते नच सम्भवतीति ध्येयम् ।

---

करणकालस्य तावताऽपि सिद्धत्वेन संहिताऽभावेऽनिष्टमपि पररूपञ्चेति चेन्न ? अचेतोदित्यत्र सिज्लोपसिद्ध्यर्थङ्क्रियमाणेन "सिज्लोप एकादेशे" इतिवार्त्तिकेन वर्णाधिकरणकालस्याधेयाभावेऽसिद्धत्वकल्पनात् । नचामुनेत्यत्रोक्तरीत्या पररूपाभावेन घेःपरस्याङ्नस्यालाभात् नाभावे कर्त्तव्ये मुत्वासिद्धत्वाप्राप्त्या तदर्थं क्रियमाणेन "नमुने" इति सूत्रेण तन्न्यायानित्यत्वमिति वाच्यम् ? तथा सति लाघवात् शास्त्रासिद्धत्वपक्षज्ञापनस्यैवौचित्यात् । "एत ईद् बहुवचने" इदमप्यत्रैवांशे ज्ञापकम् । न च "तौ सत्" इतिनिर्देशेन न्यायस्सोऽनित्य इति अन्यथा तत्रापि वृद्धिबाधे तद्बाधकपूर्वसवर्णदीर्घस्यापि बाधे तत्प्रवृत्तिर्नेति । हते देवदत्ते तद्धन्तरि हतेऽपि देवदत्तस्य नोज्जीवनं हतत्वारोपे तु सुतरान्तत् , परन्तु हन्तुमुद्यतस्य हनने तूज्जीवनमस्त्येवेति न्यायाकृतिः । तथैव प्रकृते शास्त्रहननं शास्त्रम्प्रबाध्य प्रवृत्तिरूपम् , शास्त्रम् बाधितुं प्रवृत्तस्य शास्त्रान्तरेण तद्बाधे तेन शास्त्रहननञ्च जातमिति न्यायाप्रवृत्तौ तौ इति निर्देशेन तदनित्यत्वकल्पने मानाभावात् । नचैवममू इत्यादावपि मुत्वस्य प्रसङ्गमात्रमस्तु तत्प्रशक्तौ पररूपेण बाध इत्येवासिद्धत्वेन कल्प्यत इति वाच्यम् ? कार्यासिद्धत्ववादिनो निरधिष्ठानारोपासम्भवेन कार्यप्रवृत्तेरवश्यं वाच्यतया प्रसङ्गमात्रस्य वक्तुमशक्यत्वेन उक्तन्यायविषयत्वस्य सुलभत्वात् । अतः कार्यासिद्धत्वपक्षोऽयुक्त इति ।

२—"नपदान्ते"; इति सूत्रे सवर्णानुस्वारयोरुदाहरणं शिण्ढि इति दत्तम् शिष्धातोर्लोटि रुधादिश्नमि सेर्हि "हुझल्भ्यो हेर्धिः" अल्लोपः ष्टुत्वम् जश्त्वम् अनुस्वारः। ततः परसवर्णे कर्त्तव्येऽल्लोपस्य प्राप्तमपि स्थानिवत्त्वन्निषिध्यते ।

नन्वत्र श्नमोऽकारलोपे नस्यानुस्वारे कर्त्तव्ये नकारस्य ततः पूर्वत्वेन दृष्टत्वात् "अचः परस्मिन्" इति स्थानिवद्भावप्राप्तेरनुस्वारे कर्त्तव्येऽनुस्वारस्याचः । पूर्वत्वेन दृष्टत्वाभावादचःपरस्मिन्नित्यस्याप्राप्त्या तदर्थं नपदान्तसूत्रीयसवर्णग्रहणमनर्थकम् नच परसवर्णे कर्त्तव्ये नकारवृत्तित्वतस्सिद्धानादिष्टादचःपूर्वत्वस्यानुस्वारेऽपि समानयनेन तत्र प्राप्ताचःपरस्मिन्निति स्थानिवद्भावस्य वारणार्थन्तदिति वाच्यम् ? स्थानिवत्सूत्रेण सुप्त्वादिरूपशास्त्रीयधर्मस्यैवातिदेशस्याभिमतत्वात्तत्रानादिष्टादचः पूर्वत्वरूपधर्मस्याशास्त्रीयत्वेन तत्प्रवृत्तेरनुस्वारे नकारवृत्त्यनादिष्टादचः पूर्वत्वस्यानानयनात् पुनस्तद्वैयर्थ्यात् । न च प्रदाय्यत्यादौ "न ल्यपि" इतिसूत्रबलेन यथाऽशास्त्रीयस्यापि कित्त्वस्य स्थानिवत्सूत्रेणानयनन्तथेहापि सवर्णग्रहणसामर्थ्यादशास्त्रीयस्यापि तादृशधर्मस्यानयनेऽचः परस्मिन् शास्त्रप्रवृत्त्यापत्तौ सवर्णग्रहणञ्चरितार्थमिति वाच्यम् ? ज्ञापकस्य अन्यत्र फलावत्त्वस्यांशे चारितार्थ्यं नियमेन यथोक्तेऽशास्त्रीयस्याप्यानयनमिति ज्ञापने रमायामित्यत्रापि जातेऽपि तत्र ङित्वमादाय याट्सिद्धिस्तद्वदत्र फलस्यादृष्टत्वात् । यद्यपि प्रपूर्वकादद्धातोर्णिजन्तात् क्त्वो ल्यपि वृद्धौ णेर्लोपे च प्राप्ते 'ण्यल्लोपावियङ्" इति वचनात् पूर्वं णिलोपे पश्चात् प्रत्ययलक्षणेन वृद्धौ एकदेशविकृतन्यायेन प्राप्तोऽपि "अदो जग्धिः" इति जग्ध्यादेशो न भवति समुक्तज्ञापकरीत्या स्थानिवत्सूत्रेण प्र अद्

णि च इत्यवस्थायां णेः पूर्वत्वेन दृष्टत्वं यत् तत्कालेऽदित्यत्र तदेव णिलोपे वृद्ध्यावश्यक इत्यत्रानादिष्टादचः पूर्वत्वमादायाचः परस्मिन्निति स्थानिवत्त्वेन णिजन्यत्वाभावसत्त्वान्न भवतीति फलसम्भवस्तथापि स्थानिवत्सूत्रेणादेशे हीनत्वकृतस्य सुप्त्वादेरानयनस्य त्वानुपूर्व्याङे इत्यादीनां ङकारोत्तरैकार इति रामायेत्यादौ दृष्टम् प्रकृते चानादिष्टादचः पूर्वत्वाङ्कमिति प्रश्नेऽकारयुक्तो नकार इत्यानुपूर्वी तस्याश्च स्थानिवत्सूत्रेणातिदेशस्य कर्तुमशक्यत्वात् ।

नच आदेशावृत्तिधर्ममात्रस्यानयनमनेनेति प्रकृतेऽनादिष्टादचः पूर्वत्वस्यादेशावृत्तिधर्मस्यानुपूर्वीमतोऽप्यानयने स्थानिवत्त्वाप्राप्त्या सवर्णग्रहणञ्चरितार्थमिति वाच्यम् ? तथा स्वीकारेऽपि ओमभ्यो इतिसूत्रभाष्यस्थ "स्थान्यवयवालवृत्त्यलत्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मावच्छिन्नोद्देश्यताके विधौ न स्थानिवदि" त्यनल्विधावित्यस्यार्थस्वीकारेण तेन निषेधात् स्थानिसूत्रेणाप्यतिदेशासम्भवात् । नच ङ्याब्ग्रहणेऽदीर्घः इति हल्ङ्यादिसूत्रस्थ दीर्घग्रहणप्रत्याख्यानभाष्यैश्च विरोधपरीहाराय यत्रारोप्यमाणधर्मं साक्षादवच्छिन्नोद्देश्यता तत्रैव तन्निषेधस्वीकारात् । प्रकृते साक्षादवच्छिन्नोद्देश्यताया आदेशत्व एव सत्त्वेनानादिष्टादचः पूर्वत्वे च तदसत्त्वेन निषेधाप्रवृत्तेः स्थानिवत्सूत्रप्रवृत्तेर्निर्बाधत्वात् । नचानल्विधावित्यस्य सिद्धान्तोऽर्थोऽतिदिश्यमानस्थानिघटकाल्वृत्त्यलत्वव्याप्यधर्मघटितधर्मावच्छिन्नोद्देश्यताके विधौ च स्थानिवदिति ( तेन च स्थानिघटकोऽलकारस्तद्वृत्त्यलत्वव्याप्यो धर्मोऽत्त्वम्तद्घटितो धर्मोऽनादिष्टादचः पूर्वत्वमिति तद्धर्मावच्छिन्नोद्देश्यताके विधावचः परस्मिन् इति स्थानिवद्भावरूपे कर्तव्येऽनल्विधाविति स्थानिवद्भावो निषिध्यत इति ) सवर्णग्रहणञ्चार्थमिति वाच्यम् ? तत्रास्य सूत्रस्यादेशस्य स्थानिवद्भावश्चिकीर्षितस्तत्स्थानिघटकाल्वृत्त्यलत्वव्याप्यधर्मघटितधर्मनिमित्तके विधावेव तन्निषेधाङ्गीकारेण प्रकृते नकारस्य स्थानिवद्भावश्चिकीर्षितस्तत्र स्थानिघटकोऽल् नकारस्तद्वृत्त्यलत्वव्याप्यधर्मो हल्त्वादिस्तद्धर्मघटितो न भवत्यनादिष्टादचः पूर्वत्वमिति निषेधाप्रवृत्तेस्स्थानिवदितिसूत्रप्रवृत्तेर्दुर्वारत्वात् इति चेन्न ? भाष्ये पूर्वत्रासिद्धे न स्थानिवदिति स्वीकृत्य "नपदान्त" सूत्रे वरे यलोपस्वरभिन्नानां सवर्णादीनां शेषाणामप्रत्याख्यानम्परन्तु "तस्य दोषस्संयोगादिलोपलत्वणत्वेषु" इत्यत्र स्वीकृत्यात्र संयोगादिलोपलत्वणत्वेषु पूर्वत्रासिद्धे न स्थानिवदिति वचनन्न प्रवर्तते किन्तु स्थानिवद्भावो भवत्येवेति स्वीकृतम् । एवञ्च शिण्ढीत्यत्र परसवर्णेन णकार एव विधीयत इति तस्यापि णत्वात्तत्रापि णत्वविधौ "पूर्वत्रासिद्धे न स्थानिवत्" इति निषेधाप्रवृत्त्या स्थानिवत्त्वमिष्टन्तथाच परसवर्णाभाव एवात्राभिमत इति सूत्रमतेऽपि सवर्णग्रहणस्य नोदाहरणं शिण्ढीति । नच तस्य दोष इतिवार्तिके लक्षणप्रतिपदोक्तपरिभाषया न परसवर्णादिनिष्पन्नलाक्षणिकणकारस्य ग्रहणमिति परसवर्णं इष्ट एवेति वाच्यम् ? तत्र रषाभ्यां नो ण इत्यत्र णग्रहणस्य पदान्तस्येति सूत्रस्य च मूर्द्धन्या-

नुवृत्त्यैव प्रत्याख्यातत्वेन सर्वत्रैव मूर्द्धन्यपदगृहीतलक्षणानिष्पन्नणकारस्यैव लाभेन वार्त्तिके णत्वग्रहणस्य निष्प्रयोजनत्वापत्तेः । नच सूत्रे सवर्णग्रहणसत्त्वे सवर्णविशिष्टः शिण्ढीति भाष्यमते प्रत्याख्याने च शिंढीति फलभेदे प्रत्याख्यानस्यायुक्तत्वेन फले-क्याय "तस्य दोष" इत्यत्र परसवर्णातिरिक्तणकारग्रहणेन परसवर्णविधौ "पूर्वत्रासिद्धे न" इति स्थानिवत्त्वनिषेधेन परसवर्ण इष्ट एवेति वाच्यम् ? तथा कल्पनेऽपि भाष्य-सम्मताष्टाध्यायीपक्षे पूर्वत्र षट्सूत्रीपाठस्तत्रानुस्वारस्य ययीति परत्र च पञ्चसूत्रीपा-ठस्तत्र "झलां जश्" इति ततश्च पूर्वत्रैपादिकपरसवर्णदृष्ट्या परत्रैपादिकस्य झलां जश्-त्वस्यासिद्धत्वेन यय्परत्वाभावान्न तत्रेष्टोऽस्ति परसवर्ण इति सूत्रमते न सवर्णोदा-हरणं शिण्ढीति । तथा च किमुदाहरणमिति चेदुच्यते पादयतेः क्विपि णिलोपे हस-तीत्यस्य समभिव्याहारे पाद्धसतीत्यत्र "झयो होऽन्यतरस्याम्" इतिकर्त्तव्ये पूर्वसवर्णे पञ्चमीसमासत्वेनाचोऽभावेन प्राप्तस्य स्थानिवद्भावस्य वारणार्थं सवर्णग्रहणचारितार्थ्यात् । नच "क्वौ लुप्तञ्च" इति निषेधेनैव सिद्धिरिति वाच्यम् ? एवमपि हरितशब्दादाच-क्षाणण्यन्तात् क्विपि णिलोपेऽकारलोपे चात्र णिलोपस्य स्थानिवत्त्वे क्वौ लुप्तन्ने-त्यस्य प्रवृत्तावपि अल्विधिनिमित्तकस्याल्लोपस्य स्थानिवत्त्वनिषेधार्थं हरिद्धसतीत्यादौ तच्चारितार्थ्यात् । नच पञ्चमीसमासोऽस्त्विति अन्यथा हे गौरिति भाष्यप्रयोगेऽपिपर-निमित्तकवृद्धेः स्थानिवत्त्वेनैङ्ह्रस्वादिति सम्बुद्धिलोपापत्तिस्ततश्च निरुक्तप्रयोगेऽनि-त्यत्वादेव स्थानिवत्त्वाभावे सिद्धे सवर्णग्रहणफलन्तु समाधातमिति वाच्यम् ? उक्तरीत्या हरिच्छब्दाग्रे नमतिसमभिव्याहारे हरिन्नमतीत्यत्रानुनासिके कर्त्तव्येऽचः परस्मिन्निति स्थानिवद्भावनिषेधकत्वेन तच्चारितार्थ्यात् । अनुनासिकस्यापि सवर्ण-विधित्वं सवर्णपदमपकृष्य हवलयतीत्यत्रानुनासिकवारणपरभाष्ये स्पष्टम् ।

वस्तुतस्तु निरुक्तप्रयोगेऽपि जश्त्वानुनासिकयोः प्राप्तयोर्जश्त्वदृष्ट्याऽनुनासिकस्या-सिद्धतया जश्त्वेन हकारे तस्यानादिष्टादचः पूर्वत्वाभावेन स्थानिवत्त्वप्रसक्तिरिति सवर्णग्रहणस्य पाद्धसतीत्येवोदाहरणत्वात् । पाल्लुनातीत्यत्र "तोर्लि" इति सूत्रमते समुदाहरणासम्भवात् ।

३—यणः प्रतिषेधो वाच्य इतिवार्त्तिकम्भाष्यकृता वचनरूपेण पठितम् । अत्र च वाच्य इत्यस्य व्याख्येय इत्यर्थः । व्याख्या चात्र द्विधा कृता झलीतिसूत्राज्झलग्रह-णापकर्षणेन षष्ठ्या च तद्विपरिणामेन वाक्यभेदेन सम्बध्यते तेन सामर्थ्यात् पूर्वत्रा-सिद्धस्य क्वचिदसत्त्वमपि प्रवृत्तिमाश्रित्य भाष्यादिविरोधपरिहार इत्येका । अन्तरङ्गे लोपे कर्त्तव्ये बहिरङ्गस्य यणोऽसिद्धत्वमिति द्वितीया । नच षष्ठाध्यायस्य "वाह ऊठ्" सूत्रीयाड्ग्रहणज्ञापितान्तरङ्गपरिभाषायास्सापादिकत्वेन तद्दृष्ट्या त्रैपादिकयो-र्यल्लोपयोरसिद्धत्वात् कथम्प्रवृत्तिस्तस्या इति वाच्यम् ? कार्यकालपक्षे तत्प्रवृत्त्यङ्गीका-रात् । ओमाङोश्चेत्यत्राङ्ग्रहणेनानित्यत्वज्ञापनद्वारा "केऽवा" इति निर्देशेन च उत्तरकालप्रवृत्ते लोपेऽजानन्तर्याभावेन च "नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः" इति निषेधाप्रवृत्तेः ।

तथा च "संयोगान्तलोपे यणः प्रतिषेधः, तथा झलो लोपाद् बहिरंगलक्षणत्वाद् वा" इति वार्तिकानि च संगच्छन्ते। अत्राद्य वार्तिकद्वयम् यथोद्देशपक्षाभिप्रायकम् तृतीयन्तु कार्यकालपक्षीयमिति विवेकः।

यत्तु वार्त्तिककृतो वचनप्रत्याख्यानप्रकारद्वयन्तु भाष्यकृत इति तन्निर्मूलम्, मतभेदे प्रमाणाभावात्। सर्वं वार्तिककृत एवेति हृदयम्। भाष्यकारस्तु तत्राहि वक्तव्यं यथा वक्तव्यमित्यादिशब्दैरेव प्रत्याचष्ट इति।

यदपि कौस्तुभकृत् शाखित्यादयस्संयोगान्तलोपघटिता युक्ता इति तदपि उक्तरीत्या तत्राप्रवृत्त्या दूष्यमेव।

गोरग्रवचनमिति—उणादयो व्युत्पन्नानि प्रातिपदिकानीति मते "गमेर्डोः" इति गोशब्दः प्रत्ययस्वरेणाद्युदात्तः। उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति मते च "फिषोऽन्त उदात्तः" इति। गवादिभ्यस्तृणन्देयमिति बहुव्रीहौ पूर्वपदप्रकृतिस्वरसिद्ध्यर्थम् "गोरग्रवचनम्" अन्यथाऽवङ् कदाचिदन्तोदात्तोऽपि स्यादित्येतत्सूत्रस्थभाष्यप्रामाण्येन चित्रगुग्रमित्यत्रावङोऽभावोऽस्तु। तत्रावङो रूपे विशेषस्य स्पष्टत्वात्। परन्तु हे चित्रगोऽग्रमित्यत्रावङोऽभावकल्पने किं मानमिति चेन्न! अवङादेश उपदेशे आद्युदात्तनिपातन इत्यवङ्न्यासस्थापनपरभाष्यस्यैव प्रमाणत्वात्। तथाहि चित्रगोशब्द आमन्त्रिताद्युदात्तत्वेनान्तानुदात्तस्तत्राकि आगमानुदात्तत्वं उभयोरनुदात्तयोरेव श्रवणं स्यात्। आद्युदात्तनिपातनेन च गकारोत्तराकार उदात्त इत्यपि भेदः।

न च गवाक्ष इत्यादाववङि आद्युदात्तश्रवणम्माभूदित्येतदर्थं "तस्योपदेशिवद्भावो वाच्यः" इतिभाष्येण समासान्तोदात्तादिवत् आमन्त्रिताद्युदात्तादपि पूर्वमेवावङ्स्वरप्रवृत्तौ पश्चादामन्त्रितस्वरे न स्वरभेद इति वाच्यम्? समासस्वरस्य समकालप्राप्तस्य प्रागप्रवृत्तौ उपदेशिवद्भावस्य चारितार्थ्ये तेनामन्त्रितस्वरबाधे प्रमाणाभावात्। एवञ्चागितिसूत्रमिदमुचितमितिमनोरमाकृतो युक्ताः। अवङ्न्यासे तु आद्युदात्तनिपातनोपदेशिवद्भावयोः करणे गौरवमेव स्यादित्यादि प्रपञ्चनीयम्।

४—सम्बुद्धौ शाकल्यस्येति सूत्रे सम्बुद्धिग्रहणाभावे अहो इति इत्यत्र "ओत्" इतिसूत्रं बाधित्वा परत्वात् विकल्पसम्भवः।

ननु एवमपि तस्य विकल्पत्वात् पक्षे "ओत्" इतिप्रगृह्यत्वे अहो इतीत्येव प्रयोगे फलतौल्यात् सत्यपि सम्बुद्धिग्रहणे नावगतं वैलक्षण्यम्। न च शाकल्यस्येतिविकल्पे-नाभावस्यापि तद्विधेयत्वात्तेन प्रगृह्यत्वाभावपक्षेऽपि अभावविधानसामर्थ्यान्नौत्सूत्रस्य प्रवृत्तिः, तथा च अहो इति इति नित्यप्रगृह्यत्वाभावार्थं सम्बुद्धिग्रहणमावश्यकमिति वाच्यम्? ओत् इत्यस्य इतिनिपातातिरिक्ते निपाते शाकल्यसूत्रस्य च निपातातिरिक्ते चारितार्थ्येनापवादत्वाभावादिति चेदत्रोच्यते, अस्य भावाभावयोरुभयोरपि विधेयत्वेन एतद्विषये कदाचिदपि ओत् सूत्रस्य प्रवृत्त्यभावेन विकल्पस्य दुर्वारत्वात्।

नन्वेवम् "इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च" "ऋत्यकः" "इचोऽकमकस्य गुणो वा" इत्यत्र गुणाभावस्यापि विधेयत्वेन सुमूक्षते

इत्यत्राभ्यासलोपापत्तिरिति वाच्यम् ? उभयत्र विभाषाविषये उभयोर्विधेयत्वेऽपि अप्राप्तविभाषासु भावांशस्यैव विधेयत्वेन निरुक्तदोषाभावात्। अत एव "विभाषा साकाङ्क्षे" इत्यत्र निषेधीयोभयत्रविभाषा सङ्गच्छते भाष्योक्ता। ननु परत्वनिरवकाशत्वाभ्यामाकडारीयबहिर्भूतानां संज्ञानाम्परस्परम् बाध्यबाधकभावाभावे सिद्धे तद्बहिर्भूतसंज्ञानान्तत्त्वाभावः। एवञ्च पूर्वसूत्रेणाभावपक्षे प्रगृह्यत्वे फले विशेषाभाव इति चेन्न? प्रकृते संज्ञाया एकत्वात् ज्ञापकस्य च विभिन्नविषयकत्वेनाप्रवृत्तिसौलभ्यात्। न च "ओत्" इतिसूत्रे शब्दस्थानपेक्षणात् अन्तरङ्गत्वात् प्रवृत्तौ नित्ये प्रगृह्यत्वे सिद्धे पुनरपि सम्बुद्धिग्रहो विफल इति चेत्? तदभावे निपातपदानुवृत्तौ ओदन्तनिपातस्यैव इतौ प्रगृह्यत्वेन निरुक्तलक्ष्ये विकल्पप्रवृत्तेरसुलभत्वात्। ननु सम्बुद्धिपदस्य निपातानानुवृत्तेरेव प्रयोजनत्वे "ओच्छाकल्यस्य" इतिन्यासेनैव सिद्धौ सम्बुद्धिग्रहणं व्यर्थमेवेति चेन्न? वचित्र्यार्थमेव तत्सत्त्वात्।

वस्तुतस्तु तथासति स्वादिगणे मिथोशब्दपाठेन तत्समभिव्याहृतेतिशब्दे प्रगृह्यत्वापत्तेः। मम तु सम्बुद्धिनिमित्तकौकाराभावेन न तत्प्रवृत्तिरतः सम्बुद्धिग्रहणं विधेयमेवेति।

९—आनुपूर्व्यवच्छिन्नविषयताप्रयोजकशब्दादर्थस्योपस्थितौ लोकेऽर्थस्य प्राधान्येऽपि शास्त्रेऽर्थे कार्यस्य बाधाच्छब्दस्यैव प्राधान्यम्, तथाचार्थविशिष्टशब्दस्यैव सर्वत्र ग्रहणमित्यर्थं एव "अर्थवद्ग्रहण" इतिपरिभाषाऽवतारः।

सूत्रकारमते च स्वरूपसूत्रे स्वशब्देनात्मीयवाचिनोऽर्थस्य ग्रहणेन रूपशब्देन च स्वरूपबोधकेनार्थविशिष्टशब्दस्य संज्ञीत्यर्थवद्ग्रहणपरिभाषा सिद्ध्यति।

सीरदेवाचार्यमते "व्रश्च" इति सूत्रे राजेः पृथग् भ्राज्ग्रहणं ज्ञापकम्, अन्यथा भ्राजेरपि राजिग्रहणेनैव ग्रहणे सिद्धे तद्वैयर्थ्यं स्पष्टमेव।

न च राजसाहचर्यात् फणादिभ्राज्ग्रहणार्थन्तदिति' अत एव विभ्राड् विभ्राग् रूपद्वयं सिध्यतीति वाच्यम्! तदर्थम् "व्रश्च" इति सूत्रे राज् इति पठित्वा फणादिघटकभ्राजेः स्थाने भ्राज् इत्यस्त्येवेति ऋकारान्तानुबन्धेन स एव षत्वविधौ ग्रहीष्यते फणादिरितिरूक्ते ऋभ्राज् इति पठ्यते। तथा च ऋकारान्तानुबन्धित्वाभावात्तस्य षत्वविधावग्रहणे तस्य क्विपि कुत्वे फणादेश्च षत्वे विभ्राड् विभ्रागिति रूपद्वयसिद्धेः।

किञ्च एवम् फणाद्यतिरिक्तधातावपि ऋकारोऽपि न दातव्यः किन्त्वात्मनेपदार्थमात्रफलकत्वाय भ्राज इत्यदन्तं पठित्वाऽकारेत्संज्ञयाऽपि तत्सिद्धेः। एवम् फणादेः ऋकारानुबन्धित्वात् तस्य "नाग्लोपि" इतिनिषेधेन न ह्रस्व उपधायाः। अन्यस्य चाग्लोपित्वाभावेन निषेधाप्रवृत्तौ ह्रस्वे रूपद्वयसिद्धौ "भ्राज भास" इति सूत्रे भ्राज ग्रहणमपि न कार्यमिति महल्लाघवम्।

न चैवमपि 'व्रश्च भ्रस्ज" इतिसूत्रे ऋकारानुबन्धग्रहणे यङ्लुकि राराष्टीत्यादौ "श्तिपा शपा" इति निषेधात् षत्वमेतेन न स्यादिति वाच्यम्! "गुणो यङ्लुकोः"

इति सामान्यापेक्षज्ञापनेन "श्तिपाशपा" इति निषेधस्यानित्यत्वात् भाष्ये तस्यानुक्तत्वाच्चापत्तिपरिहारात्। यङ्लुकश्छान्दसत्वेन छान्दसे दृष्टानुविधानाच्च। एवं सति सीरदेवोक्तं ज्ञापकमपि सम्यगिति चेन्न? तत्र सूत्रे भ्राजादिसाहचर्येण धातुसंज्ञकराजेर्ग्रहणं स्यादिति भ्राज्ग्रहणस्यावश्यकत्वात्। नहि भ्राज्घटको राजिति धातुर्धातुत्वस्य भ्राज्समुदायवृत्तित्वात्। नापि भ्राज्घटकराजेः ऋकारानुबन्धित्वम्, तस्य समुदायानुबन्धत्वात्। इति भ्राज्ग्रहणस्य सार्थकत्वेन वैयर्थ्याभावाज् ज्ञापनासम्भवादिति।

६—ननु "इदुदुपधस्य" इतिसूत्रस्य व्याख्यादर्शरीत्या प्रत्ययभिन्नो यो विसर्गस्तस्य षत्वमित्यर्थे मातुः कार्यमित्यत्रापि विसर्गस्य षत्वापत्तिः नच प्रत्ययसम्बन्धिभिन्नस्य विसर्गस्य षत्वमिति सिद्धान्तार्थं कविभिः कृतमितिवत् न षत्वमिति वाच्यम्? तत्पक्षेऽपि दोषसम्भवात्। नचङसोऽकारवृत्ति प्रत्ययत्वं तदादेशे स्थानिवत्त्वेनादाय विसर्गस्य प्रत्ययसम्बन्धितया न सिद्धान्तार्थे दोष इति वाच्यम्? प्रत्ययत्वस्य पर्याप्त्या समुदायवृत्तित्वात् सकारस्य विद्यमानतयाऽकारे प्रत्ययत्वाभावेन तदादेशेऽपि प्रत्ययत्वानयनासम्भवात्। नच सकार एवोत्वादेशे सकारपर्याप्तप्रत्ययत्वमादाय दोषोद्धार इति वाच्यम्! रात्सस्येति सकारस्य लुप्तत्वेन तेन सहैव प्रत्ययत्वस्यापि निवृत्तेः। यद्यपि "अन्तादिवच्च" इत्यनेन परस्थानिघटितसमुदायवृत्तिधर्मस्परादिवद्भावेनैकादेशविशिष्ट आत्मनीकल्पनेऽतिदेशान्माथेनोरित्यत्र प्रत्ययत्वमादाय विसर्गस्य तत्सम्बन्धित्वे सिद्धान्तपक्षे तद्दोषवारणं सम्भवति। तथापि षत्वविधायकशास्त्रस्य त्रिपादीस्थत्वेन "अन्तादिवत्" सूत्रदृष्ट्या तदसिद्धत्वेन तत्र परादिवद्भावाप्रवृत्तेः। नच स्थानिवत्सूत्रेणैव विसर्गे प्रत्ययत्वमानेयमिति वाच्यम्? उपात्तस्थानिनोऽकारस्य प्रत्ययत्वाभावविशिष्टस्य पूर्वमुपपादितत्वात्। नच पर्याप्त्या प्रत्ययत्वस्य असित्यत्रैव स्वीकारेऽपि अकारे प्रत्ययसम्बन्धित्वस्याक्षततया स्थानिवद्भावेन विसर्गे प्रत्ययसम्बन्धित्वमानीय सिद्धान्तपक्षे न दोष इति वाच्यम्? प्रत्ययसम्बन्धित्वस्याशास्त्रीयस्य शास्त्रीयधर्मारोपकस्थानिवत्सूत्रेणानतिदेशाददोषात्। नच "सर्वे सर्वपदादेशाः" इति न्यायेनासित्यस्योरित्यादेशस्वीकारेणानुमानिकस्थानिवद्भावेन प्रत्ययत्वं स्यादिति वाच्यम्? तथा प्रवृत्तावपि मातृअसित्यस्य स्थाने मातुर् स इत्यादेश इति बुद्धेरेव युक्ततया विसर्गस्य तत्त्वाप्रसिद्धेः। अत एव प्रकृतसूत्रे भाष्ये पितुः करोतीत्यत्र षत्वापादनं युक्तं सङ्गच्छते इति चेन्न? कस्कादिगणे भ्रातुष्पुत्रशब्दस्य पाठसामर्थ्येन त्रिपाद्यामपि "अन्तादिवच्च" इतिशास्त्रप्रवृत्तिज्ञापनद्वारा एकादेशशास्त्रनिमित्तकस्य विसर्गस्य षत्वाभावोपपादनात्। अत्र ज्ञापनन्तु "त्रिपाद्यामपि अन्तादिवच्च इति शास्त्रम्प्रवर्त्तते" इत्येव। मूले तत्फलितमेव "एकादेशशास्त्रनिमित्तकस्य विसर्गस्य न षत्वम्" इति। अत एवामी इत्यत्र पररूपाद्युत्तरमपि "अन्तादिवच्च" इत्यनेन अदस्सम्बन्धित्वमानीयमीत्व आरपेणेत्यत्र टादेशेनस्यैकारेण सार्द्धं

गुणेऽपि एकाजुत्तरपदत्वम्पे इत्यत्र स्वीकृत्य णत्वञ्च सिध्यति। ननु भाष्ये "एकादेशशास्त्रनिमित्तात् परस्य विसर्गस्य न षत्वमित्येव ज्ञाप्यं स्वीकृत्य ओषधीस्कृधीत्यत्र शला पूर्वसवर्णदीर्घैकादेशे तेन ज्ञापितांशेन "कःकरत् कृधि" इतिशास्त्रीयषत्वं वारितम्भवति। भवदुक्तैकादेशानिमित्तकस्य नेति वचनस्य तत्र विसर्गेऽप्रवृत्त्या दोषतादवस्थ्यमिति चेन्न? छन्दसि दृष्टानुविधिस्वीकारेण तत्र सत्वापत्तेस्सुवारत्वात्। "छन्दसि वा प्र" इतिसूत्रात् पूर्वमेव पपदस्य निवृत्तेः "कःकरदि"त्यत्र तदनुवृत्तेरभावेनेह तेन षत्वप्रवृत्तेरभावाच्च।

वस्तुतस्तु—अग्रिमे "अपदान्तस्य मूर्धन्यः" इत्यत्र मूर्धन्यग्रहणखण्डनावसरे "इणः षः" इत्यतःषमनुवर्त्तयता भाष्यकृता विरोधे तादृशानुवृत्त्यभावरूपोत्तरस्यायोग्यत्वेन छन्दसि दृष्टानुविधेरसार्वत्रिकत्वेन च ओषधीस्कृधीत्यत्र षत्ववारणाय भाष्योक्त एव "आदेशशास्त्रनिमित्तात् परस्य न षत्वमिति" ज्ञाप्यांश एव स्वीकार्यं इति। मनोरमाशब्दरत्नकृतौ तु "कः करत्" इत्यत्र षग्रहणानुवृत्तिविस्तारशैल्या सुयोज्यौ। हरदत्तेन च वृत्तिव्याख्यायां "कः करत्" इत्यत्र सपदं षकारस्याप्युपलक्षणमिति वृत्तिग्रन्थस्तु योजित इति विभाव्यते चेद् आन्तानैतौ पौत्रपितामहाविति।

७—"हलन्त्यम्" इत्यत्रोपदेशेऽजित्यत्र उपदेशपदमनुवर्त्तते तच्च भावसाधनम् उपेत्य व्यवहस्यायार्थकत्वेन दिशेरुच्चारणार्थकत्वेन आद्योच्चारणमित्यर्थकम्। ननु भाष्ये "उपदेशेऽज्" इत्यत्रोपदेश इति किमिति प्रश्ने अभ्र आँ अप इति प्रयोगे इत्संज्ञारूपदोषानन्तरमुपदेशपदार्थजिज्ञासायाम् प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देश इत्युक्त्यनन्तरं सत्यपि तस्मिन् तदि। दूषणमगीकृत्य ( लोकव्यवहारेण सङ्कीर्णत्वस्योद्देशोपदेशयोराशङ्कया ) उपदेशनेऽजनुनासिक इति वार्त्तिककृद्दर्शितन्यासस्य खण्डने भाष्यकृता करणल्युडन्तस्यैव स्वीकृतत्वेन कथमेतदिति चेन्न? ल्युटा ( करणाधिकरणयोश्च ) बाधेन करणे गत्रा ( अकर्त्तरि च कारके संज्ञायाम् इत्यत्र को भवता लाभ लब्ध इति सिद्धये संज्ञायामित्यस्य प्रायिकत्वात् ) दुर्लभत्वेन तद्भाष्यस्य प्रौढिवादत्वात्। नच वासरूपन्यायेन पक्षे घञीष्टसिद्धिरिति वाच्यम्? अर्हे कृत्यतृजग्रहणादिना क्तल्युट्तुमुन्खलर्थेषु तदप्रवृत्तेः। नच तत्र तुमुना साहचर्यात् भावल्युट एव ग्रहणे निषेधो न प्राप्नोतीति वाच्यम्? ईषत्पानस्सोमो भवतेत्यत्र कर्मणि खल् नेति भाष्यात् समुक्तवार्त्तिके साहचर्यानाश्रयणात्। ननु "पुंसि संज्ञायाम्"इत्यनेन घ एवास्त्विति चेन्न? उपदेशस्यासंज्ञात्वात् प्रायेण संज्ञायामिति व्याख्यानेनासंज्ञायामपि घप्रत्ययस्तु न? नह्युपाधेरुपाधिर्भवतीति भाष्येण तद्व्याख्यानस्यानादरात्। नच "हलश्च" इति घञ् स्यादिति वाच्यम्? तस्यापि उत्सर्गसमानदेशापवादन्यायेन संज्ञायामेवेष्टत्वात्। नापि बहुलब्देन घञ्! तस्यागतिकगतित्वात्। नच "खनो घ च" इतिघप्रत्ययोऽन्यतो विधानार्थ इति तेन घोऽस्त्विति वाच्यम्? भगः पदमित्यादौ यत्र विश्वेफलं तत्रैव तत्प्रवृत्तेः। अतो भाव एव प्रत्ययो न्याय्यः। अत "उच्चार्य

वर्णानाञ्चोपदिष्टा इमे वर्णाः” इति भाष्यं संगच्छते । उद्दिष्टो मेऽनुवाक उपदिष्टो मे पन्था इति लोकसाङ्कीर्ण्यं लक्षणया व्यत्ययेन व्यवहारः । भवन्मते उपदेशशब्दस्य प्रत्ययघटादिपरत्वे तस्यैव “हलन्त्यमि”त्यत्रान्वये यत्किञ्चित्समुदायान्त्यस्येत्संज्ञावारणा· सम्भवे तदर्थम् ‘व्यवसितान्त्यमिति वक्तव्यम्” इति वार्त्तिककृतः, तत्प्रत्याख्यानपरो “हलन्त्य” शास्त्रेऽन्त्यग्रहणसामर्थ्यादुपक्रमो भाष्यकृतश्च व्यर्थस्स्यात् । सङ्कीर्णलोक· व्यवहारस्य “लटस्सद् वा” इत्याद्यर्थम् अवश्याङ्गीकाराच्चेत्राह “आदेच उपदेशेऽशि· ति”इत्यादौ “उद्देशश्च प्रातिपदिकानाञ्चोपदेश” इति “एकाच उपदेशेऽनुदात्तात्” इत्यादिस्थले आद्योच्चारणार्थत्वस्यैव सर्वसम्मतत्वाच्चेति ।

अत्र केचित् प्राहुः—एकस्यैवोपदेशशब्दस्य व्युत्पत्तिवैचित्र्येण कर्मकरणसाधन· त्वमङ्गीकृत्य “धातुसूत्रगण”इत्यादि पठित्वा करणव्युत्पत्त्या पूर्वार्द्धोपात्तानाम् कर्मव्यु· त्पत्त्या उत्तरार्द्धोपात्तानामागमादीनाञ्च वदन्त्युपदेशत्वमिति तत्र ते प्रष्टव्याः, किम् उपदेशशब्दस्संज्ञात्वेन रूढिशक्त्याऽमून् बोधयत्युत यौगिकशक्त्येति । तत्राद्यपक्षो न युक्तोऽसंज्ञात्वाद् घप्रत्ययो नेति भाष्यादिग्रन्थेन सज्ञायास्शास्त्रकारैरनुक्तेः । संज्ञाशब्दै· नैषूपदेशत्वव्यवहार इत्युच्यमानेऽपि “आमोऽमित्त्वमि” त्यादिस्वपरग्रन्थविरोधात् । नच तत्राकारोच्चारणसामर्थ्यान्न दोष इति वाच्यम् ! तेनाद्योच्चारणार्थकत्वस्यैव ज्ञाप्यमानत्वे लाघवात् । किञ्चैवं सति प्रत्ययविधौ पञ्चम्याः षष्ठीप्रकल्पकत्वे “गुप्ति· ज्किद्” इतिसूत्रे प्रत्यासत्त्या व्याख्यानाच्च सनस्सनैवादेश इत्यादेशस्योपदेशाभा· वादित्संज्ञा न स्यात् इति भाष्यकैयटोक्तिरसंगता स्यात् । किञ्च “न धातुलोप” इति सूत्रे धातु इति किं लूञ् लविता उपदेश एवानुबन्धलोपे कृते ततो धातुसंज्ञेति भाष्य· कैयटयोरनुपपत्तिः । नच तत्र सूत्रसाहचर्यात् धात्वादिना पाणिन्यादिपठितानुपूर्वी· काणामेव ग्रहणे भाविसंज्ञाविषयघटितत्वेन धातुपाठादिवत् धातुत्वादिव्यवहारोपप· त्तिरेवेति वाच्यम् ! आद्योच्चारणविषयाणामित्येव सिद्धे तादृशगौरवस्यायुक्तत्वात् । अथवाऽऽपद्येपि “अलोऽन्त्यात्” सूत्रभाष्ये “श्वसोः” इति शास्त्रे लोपश्चेति द्विश· कारको निर्देशो द्वितीयश्शकार इदिति भाष्यविरोधापत्तेः । किञ्च “नमो वरिवश्चि· त्रङः” इति सूत्रस्यापि पूर्वोक्तरीत्याऽसंग्रहापत्तेश्च । नान्त्योऽपि पक्षः, तत्र योगमात्र· स्वीकारे परिगणनवैयर्थ्यापत्तेः । धात्वादिषु करणव्युत्पत्तिरागमादिषु नेति वैषम्ये मानाभावाच्चेति । किञ्च तथा स्वीकारे उपदेशताप्रयोजकधातुत्वादिरूपोपाधि इति स्वोक्तग्रन्थो विरुध्येत । तथाहि उपदेशशब्दः करणघञन्तः ततस्तल्प्रत्यय एवञ्चोप· देशतेत्यस्य आद्योच्चारणनिष्ठजन्यतानिरूपितजनकतेत्यर्थः । जनकताप्रयोजकत्वस्य कण्ठताल्वाद्यवच्छिन्नवायुसंयोगे आत्मसमवेतप्रयत्ने वा सम्भवेऽपि धातुत्वादौ तद· भावेन भवदुक्तिरसंगता स्यात । यद्यपि संज्ञापक्षे उपदेशता उपदेशशब्दत्वम् उपदे· शशब्दस्य शब्दगतपरत्वात् तदवच्छिन्नस्य प्रयोजकन्तु रूढ्यर्थतावच्छेदकतया धातु· त्वादि वक्तुं शक्यं तथा नास्तीति दोषः स्पष्ट एव । नचोपदिश्यते ज्ञाप्यतेऽनेनेति व्युत्प·

स्याऽत्र पक्षे लोपश्चेति नासंग्रहं यथा भाष्यादिभिः अनोभरे ज्ञाप्यते तथाऽनेन शकारेण सर्वादेशत्वं ज्ञाप्यते इति वाच्यम् ? इत एवाखदेः "आदेच उपदेशे "उपदेशेऽज्वत" इत्यादावाद्योच्चारणस्यैव सर्वसम्मतत्वात् । पक्षद्वयेऽपि लिङ्गानुशासनस्य प्रयोजनाभावेन कारिकापाठस्याप्रामाणिकत्वात् इति भाग उपेक्षिताः ।

८—अयञ्च प्रश्नो द्वितीयप्रश्नादभिन्न एवेति न पृथग् लेखावश्यकत्वमिति ।

९—अत्र सूत्रे सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्याग्राह्यतान्यायेन अप्रत्ययस्य इत्यस्य सामानाधिकरण्येन ( अभेदार्थकेन ) अप्रत्ययो यो विसर्गस्तस्य षत्वमित्यर्थः सम्भवति । नच विसर्गमात्रस्य प्रत्ययात्मकत्वन्दुर्लभमिति वाच्यम् ? अग्निः करोतीत्यादौ स्थानिवद्भावेन तत्प्रसिद्धेः । नच अतिदेशशास्त्रस्य सापादिकत्वेन तद्दृष्ट्या त्रैपादिकस्य विसर्गविधायकस्यासिद्धत्वेन तथापि विसर्गलाभ एवेति वाच्यम् ? अप्रत्ययस्य इति निषेधारम्भसामर्थ्याद् वतिघटितातिदेशानान्त्रिपाद्याम् प्रवृत्तिज्ञापनात् । अत एव अग्निरित्यादौ रोर्विसर्गसिद्धिः अन्यथाऽपदान्तत्वान्न स्यात् । विसर्गविधिस्तु पुनरित्यादौ चरितार्थः । ज्ञाप्यांशोऽप्येष विशेषापेक्ष इति तेन "अचः परस्मिन्" इतिशास्त्रस्य त्रिपाद्यामप्रवृत्तेः "पूर्वत्रासिद्धे न स्थानिवत्" इति भाष्यसिद्धान्तोऽपि फलितार्थप्रतिपादक एव एवं सिद्धान्ते कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठात् "एकादेशशास्त्रनिमित्तकस्य न षत्वमिति" ज्ञापनात् भ्रातुः कार्यमित्यादौ उरित्यस्य प्रत्ययत्वाभावेन तद्विसर्गस्य षत्वाभावशङ्काऽपि परास्तेति मनोरमाशयः ।

शब्दरत्नकारैस्तु कविभिः कृतमित्यादौ षत्वं समाशङ्क्य प्रत्ययपदम्प्रत्ययसम्बन्धिपरम्, तथा च प्रत्ययसम्बन्धि ( प्रत्ययावयव ) भिन्नस्य विसर्गस्य षत्वमित्यर्थस्सम्पादितः । तथा च अग्निः करोतीत्यादौ न कुत्रापि दोष इति स्थापितम् । अत्रांशे मानन्तु कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठः "नित्यं समासे" इत्यत्रानुत्तरपदस्थग्रहणञ्च नान्यथा तयोस्साफल्यम् । पूर्वोक्तसामानाधिकरण्ये "इसुसोः" इत्यनेनैव सिद्धावप्रत्ययग्रहणस्य व्यर्थमेव स्यात् । मातुरित्यत्र प्रत्ययसम्बन्धित्वस्याशास्त्रीयधर्मत्वेन स्थानिवत्सूत्रेण शास्त्रीयस्यैवातिदेशात् न तत्त्वम् । आनुमानिकस्थान्यादेशभावेन तत्रोसि प्रत्ययत्वोपलब्ध्याऽप्रत्ययस्येत्यस्य वैय्यधिकरण्यमेवेति व्याख्यानुकूलयितारो हरदत्तादयः ।

१०—अयञ्च प्रश्नो निरुक्तचतुर्थप्रश्नादभिन्न इति तथैवानुसन्धेयः ।

११—अत्र "भो भगो अघो अपूर्वस्ये"ति सूत्रे सकारान्तनिपातैकदेशौकारान्तानां वार्त्तिकनिष्पन्नरुत्वान्तैकदेशौकारान्तानाञ्चानुकरणेऽपि द्वन्द्वनिष्पत्त्यर्थम् प्रत्येकम् विभक्त्युत्पत्तौ सामासिकविभक्तिलुकि प्रत्ययलक्षणेन प्राप्तपूर्वरूपस्य सौत्रत्वाद् वारणेऽपि एतत्पूर्वस्य रोर्यादेश इत्येकवाक्यार्थबोधसम्भवेऽपि भिभोरिदं सुभभगो रिदं रघोरिदमित्यादौ रोर्यादेशापत्तिरतस्सान्तरान्तान्यतरानुकरणम् ।

तथा सत्यर्थवत्स्वरूपपरस्परसाहचर्येणार्थवतामेव तेषां ग्रहणेन न निरुक्तातिव्याप्तिः। यद्यप्यत्र पक्षे एकवाक्यता न सम्भवति भोरादिभ्यो रोरभावात्तथापि निरुक्तातिव्याप्तिपरिहाराय वाक्यभेदो व्याख्येयः। नचैवम् भो राजसे इत्यादावपि यत्वस्यासिद्धत्वात् "रोरि" इति लोपे एकदेशविकृतन्यायेन ओकारस्य यत्वापत्तिरिति वाच्यम्? एषां रोर्यादेश इति व्याख्यया दोषाभावात्। ननु निपातेनैव सकललक्ष्यनिर्वाहे "विभाषा भवदिति" वार्त्तिकन्नाश्रयणीयमितिचेन्न? निपातमात्राङ्गीकारे "स्युः प्याट्पाडङ्गहेहैभोः" इत्याद्यमरोक्तानां सहप्रयोगानापत्तेः।

नच व्यतिलुनीते द्वौ ब्राह्मणावितिवत् तयोः सहप्रयोग इति वाच्यम्? एवमपि तत्र भोरित्यत्र "इतराभ्योऽपि दृश्यन्ते" इति सूत्रेण त्रल्प्रत्ययानापत्तेः। भवदादियोग इति वार्त्तिके निपातस्यापि भोशब्दस्य ग्रहणे निरुक्तप्रयोगसिद्धिरिति चेत्? भगोस्तिष्ठसि, आंभगो देवदत्त, भगो भगो देवदत्त, भगो भगो आगच्छ, घनेन भगो इत्यादावामन्त्रितनिघाताऽविद्यमानवद्भावैकपदान्तरितत्वद्विर्वचनगराङ्गवद्भावानापत्तेः।

ननु भगो अघो इतिनिपातयोरपि सम्बोधनप्रथमान्तत्वेन आमन्त्रितत्वेन पूर्वोक्तकार्याणि सिध्यन्तीति चेन्न? उक्तनिपातयोस्सम्बोधनान्ते शक्तिस्तयोश्चात्र ग्रहणमित्यत्र प्रमाणाभावात्। न चैवं वर्त्तिकस्यावश्यकत्वे निपाता एवान्यथासिद्धा इति वाच्यम्? भो विद्वद्वृन्द भो गङ्गे भो हरिहरौ इत्यादौ सम्बुद्धिपरत्वाभावेन वार्त्तिकाप्रवृत्तौ तत्सिद्ध्यर्थम् भोरिति निपाताङ्गीकारात्। नन्वेवमपि भगो अघो इति निपातावाश्रित्य वार्त्तिकन्नाश्रयणीयमितिचेन्न! दत्तभोरिति निपातमात्रे भवच्छब्दप्रत्याख्यानेऽपि भगो तिष्ठसीत्यादिलक्ष्यसिद्ध्यर्थम् भगवदघवच्छब्दयोर्वार्त्तिकेऽवश्याश्रयणीयत्वात् निपातयोस्तयोरप्रामाणिकत्वाच्च। अत एव भाष्ये भो ब्राह्मणा भो ब्राह्मणीत्याद्यसिद्धिमाशंक्याव्ययमेष भोश्शब्द इत्युक्तन्तु तावपीति प्रपञ्चितम्।

१२—अत्र पूर्वसूत्राभ्यां गुणवृद्धिपदे अनुवर्त्यात्रत्यगुणवृद्धिपदेन सहयोजनया गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्रेक इत्याद्यर्थो लभ्यते। तेन "त्यदादीनामः" इत्यादौ नास्योपस्थितिः। नन्वनुवर्त्तमानं गुणवृद्धिपदं स्वरूपपरमर्थपरंवा। नाद्यः, सूत्रस्थगुणवृद्धिपदयोरर्थपरत्वेनाभेदान्वयानुपपत्तेः। नद्वितीयः, अभेदसम्बन्धावच्छिन्नयत्किञ्चिद्धर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकावच्छिन्नशाब्दबोधम्प्रति प्रकारतावच्छेदकविशेष्यतावच्छेदकधर्मयोर्विकल्पोपस्थितेहेतुत्वेन प्रकृते च तयोरवयेनाभेदान्वयानुपपत्तेः। नापि भेदान्वयबोधः, भिन्नविभक्तिकत्वादिरूपतात्पर्यग्राहकाभावादिति चेन्न? अनुवर्त्तमानगुणवृद्धिपदयोस्तत्प्रयोज्ये लक्षणयाऽभेदान्वयबोधसम्पत्तेः। उपस्थितैकपदस्य सम्भवस्थले "सार्वधातुकार्द्ध" इत्यादौ सामानाधिकरण्येनैवान्वयः। यत्रचासम्भवस्तत्र "मृजेर्वृद्धिः" इत्यादौ वैय्यधिकरण्येन। श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानामिति सूत्रावलोकनेन लिङ्गस्य श्रुत्यपेक्षया दौर्बल्य-

बोधनेन प्रथमतः श्रौताङ्गपदार्थादिघटितवाक्यार्थबोधे सम्पन्ने स्थानेऽन्त्यादेशादिविध्याकाङ्क्षाशान्तत्वेन निष्फलत्वात् "अचो ञ्णिति" इत्यादौ नैतत् प्रवर्त्तते । "सार्वधातुकार्धधातुकयो"रित्यादौ तु तदुपस्थितिमन्तरा नाकाङ्क्षाशान्तिरिति तदुपतिष्ठत एव । एवञ्च पदश्रुतिनिमित्तैषा पदैकवाक्यतयाऽन्वयवती अन्तरङ्गा, स्थानषष्ठीत्वनिर्णयोत्तरम् प्रवर्त्तमाना "अलोऽन्त्यस्य" परिभाषा तु वाक्यैकवाक्यतयाऽन्वयवती बहिरङ्गा । नच परिभाषयोरङ्गाङ्गीति सिद्धान्तः ।

यत्तु तच्छेषपक्षमवतार्य "सार्वधातुक" इत्यादिना सहानयोरेकवाक्यतयाऽन्वय इति वदन्ति तन्न विचारसहम् ? सार्वधातुकेत्यादौ तथात्वेऽपि "मिदेर्गुणः" इत्यादौ सत्प्रतिपक्षन्यायेनोभयोरपि अप्रवृत्तौ सर्वादेशगुणापत्तेः । तद्वारणाय तत्र तत्रेग्ग्रहणे तु महागौरवम् इति स पक्षो भाष्ये दूषितः ।

यद्यपि "मिदेर्गुणः"इत्यादौ मिद इगिदिस्तस्येति व्याख्यानेन च तत्पक्षेऽपि दोषोद्धारसम्भवस्तथापि तथा व्याख्याने पुकि अन्त इति सप्तमीसमासे यापयतीत्यादावपि गुणेन ह्रस्वाकारापत्तिः । नच कृतेऽपि गुणे वृद्ध्या रूपसिद्ध्या न दोष इति वाच्यम् ? "जाग्रोऽवि" इति सूत्रे विण्णल्ग्रहणेन गुणोत्तरा वृद्धिर्नेति ज्ञापनात् । इति चेन्न ! "स्फायोच्च यापनायाम्" इति निर्देशसङ्गतये तस्य विशेषापेक्षत्वकल्पद्वारा जागृधातुमात्रविषयकत्वात् । असत्येव बाधके प्रमाणसामान्यन्यायात् । "ऋदृशोऽङि गुणः" इत्यत्र च "ऋदृशोऽङि गुणो दृशश्चे"ति न्यासस्यापि निर्वाहः । नचैवन्तदुद्दृष्टत्वे ( तच्छेषपक्षादुष्टत्वे ) कथं पदोपस्थितिपक्षावतार इति वाच्यम् ? पुगन्तेत्यादौ इक्परिभाषानुपस्थितौ छिन्नो भिन्न इत्यादौ निषेधाप्रवृत्त्या गुणापत्तेः । नचैवं "श्रसि गृधि" इति क्नोः कित्त्वकरणसामर्थ्येन "क्ङिति च" इति निषेधस्य पुगन्तशास्त्रीयातिरिक्तविषयकत्वकल्पनात् क्षिप्नुरित्यादौ गुणवारणाय क्वचिदिग्लक्षणोऽपि निषिध्यते इति ज्ञापनेन छिन्नादौ न दोषस्तच्छेषपक्षेऽपीति वाच्यम् ? तदपेक्षया लाघवेन भाष्यसम्मतपदोपस्थितिपक्षस्यैव तेन ज्ञापनाददोषादिति ।

१३—अयम्प्रश्नः प्रथमप्रश्नात्मक एवेति न पृथग्लेख्यः ।

१४—अयमपि प्रश्नो द्वितीयप्रश्नात्मक इति सकृदेव बोध्यः ।

१५—अत्र प्रतिपदोक्तस्यैक इत्यपि बोध्यम् "गोरग्वचनं स्वरसिध्यर्थम्" इति पृच्छ्यते । तच्च तृतीयप्रश्ने लिखितमेवेति तत एवानुसन्धेयम् ।

१६—अयञ्च प्रश्नः षष्ठप्रश्नेनैव गतार्थ इति तत एवानुसन्धेयः ।

१७—एष प्रश्न एकादशप्रश्नांश एवेति तत एव तदुत्तरम् ।

१८—प्राचीनमते स्वरितमात्रे समांशोदात्तानुदात्तौ इष्टौ तौ च न स्यातान्तथाहि "तस्यादित" इति सूत्रे अर्द्धह्रस्वशब्दे ह्रस्वस्यार्द्धमित्येकदेशिसमासे ह्रस्व एव तौ स्यातान्नतु दीर्घादिस्वरिते ।

अर्द्धञ्च तद्ध्रस्वञ्चेति कर्मधारये दीर्घस्वरिते एव तौ स्याताम् । अर्द्धेन सहित-

मिति मध्यमपदलोपिनि प्लुतस्वरित एव तौ भवतामतो ह्रस्वग्रहणमतन्त्रमित्युक्तम्। उपेयिवाननिति सूत्रे उपेतिवत्। ननु तत्र "ईयिवांससमतिस्रिधः" इति वैदिकप्रयोग दर्शनाद्विवक्षाऽस्तु इहाविवक्षायाङ्किम्मानमत आह प्रातिशाख्यं लक्षयन्न। तथाहि येऽरा इत्यत्रैकारः अर्द्धोदात्तानुदात्तः, तनूनपात् शचीपतिमित्यत्रोकारेकारौ च तथा। ननु वनस्पत्यादिगणे पाठेन पूर्वोत्तरपदयोराद्युदात्ते कृते शेषनिघातेनानुदात्तावेव ताविति चेन्न ? "अतोऽन्यत् स्वरितं स्वारजात्यमाचक्षते पदे" इति लक्षणलक्षित-जात्यस्य "जात्यवद् वा तथा वान्तौ" इति प्रातिशाख्येन तयोस्स्वरितविशेषविधानात्।

एकाक्षरसमावेशे पूर्वयोः स्वरितस्स्वरः।
तस्योदात्ततरोदात्तादर्द्धमात्रार्द्धमेव वा ॥ १ ॥
अनुदात्तः परश्शेषस्स उदात्तश्रुतिर्न चेत्।
उदात्तं वोच्यते किञ्चित्स्वरितं वाक्षरम् परम् ॥ २ ॥

इति प्रातिशाख्यैश्च स्वरितार्द्धस्योदात्तत्वे प्रमाणदार्ढ्यात् प्रातिशाख्यान्तर-मपि। यथा।

अप्राकृतस्तु यःस्वारस्स्वरितोदात्तपूर्वगः।
उदादायार्द्धमस्याथ शिष्टन्निघ्नन्ति कम्पितम् ॥ इति।

एवञ्च हरदत्तेनार्द्धह्रस्वशब्दस्यार्द्धमात्रायां लक्षणाङ्गीकृता सा नादरणीयेति प्राञ्चः।

नव्यास्तु उक्तप्रातिशाख्यादिबलात् यद्यपि तच्छाखास्थोदाहरणेषु तादृशान्तस्व-न्तथापि अन्यत्र लौकिकवैदिकोदाहरणेषु दीर्घादिष्वपि अर्द्धमात्रैवोदात्ता। अत एव "अर्द्धह्रस्वशब्दोऽर्द्धमात्रायां रूढ" इति भाष्यम्।

प्रमाणमेव ह्रस्वादावनुशास्त्रम्प्रतीयते।

इति वाक्यपदीयम्। अनुपात्तमपि अर्द्धमात्राख्यप्रमाणमेवोपलक्ष्यते इति हेलरा जग्रन्थाश्च संगच्छन्ते। इदमेव च मतं श्रेयः।

१९—आदौ वर्णानामुपदेशस्तदुत्तरकालमित्संज्ञा तदुत्तरम् "आदिरन्त्येन" इति-प्रत्याहारस्तदुत्तरकाला सवर्णसंज्ञा तदुत्तरकालम् "अणुदित्" इति इति वाक्यापरिस-माप्तिन्यायेन "आदिरन्त्येन" इतिप्रत्याहारसिद्धौ "नाज्झलौ" इत्येतद्वाक्यार्थबोधे निर्णीतैतद्विषयपरिहारेण सवर्णपदबोध्यत्वनिश्चये "अणुदित्" सूत्रेण तावतां ग्रहणं बोधनीयम्। अन्यथा तुल्यास्यसूत्रजशक्तिग्रहेऽप्रामाण्यसन्देहेन अनाहार्याप्रामाण्य-ज्ञानानास्कन्दितेत्यादिलक्षणलक्षितबोधानापत्तिः। अत एवाणुदित्सूत्रे सवर्णानां ग्रहो न भवति।

अत्र परणकारेणाण्ग्रहणे प्रमाणन्तु "उरण् रपरः" इतिसूत्रे तपरकरणमेव। तथा हि तत्र चौरादिकण्यन्तात् कॄत् धातोर्लुङि अचीकृतत् इत्यत्र दीर्घकारस्य स्थाने ह्रस्व एव यथा स्यादित्येतदर्थम्, पूर्वणाण्ग्रहणे तु उद्देश्येन विधेयेन च ऋकारेणाण्त्वाद् भिन्न-

कालग्रहणेन न तस्य स्थानिवत्त्वेनाऽऽदेशत्वप्रसक्तिरिति व्यर्थं तत् स्यात् । नच तपरसूत्रेण ऌकारग्रहणार्थं तत् ? स्थानेऽन्तरतमपरिभाषया ऋकारस्थाने तस्य बाह-ल्येन तद्ग्रहणे प्रमाणाभावात् । नच ज्ञापितेऽपि भाव्यमानपरिभाषया सवर्णग्रहणाप्रस-क्तेस्तद्वैयर्थ्यमिति वाच्यम् ? तपरत्वाभावे आदेशान्तरनिवृत्त्यर्थत्वेन स्वरूपाभ्यनु-ज्ञानार्थतयाऽपूर्वबोध्यत्वाभावेनाविधेयत्वात् । कृते तु भाव्यमानतापीत्यन्यदेतदिति शब्दरत्नकाराः ।

२०—द्वितीयप्रश्नवदस्योत्तरम् ।

२१—तुरीयप्रश्नवदस्योत्तरमिति न पृथक् ।

२२—नवमप्रश्नवदयमप्युत्तरणीयो न वैलक्षण्येन ।

२३—प्राचीनैश्च अण्ग्रहणाभावे ऊढ इत्यत्र दीर्घापत्तिर्दोषो दत्तः । तदसमञ्जसम्, यतो हि तत्र ढलोपाभावेन सूत्रस्यैवाप्रवृत्तेः । तथाहि "दृढः स्थूलबलयोः" इति सूत्रेण दृहेर्नकारहकारयोर्लोपः तकारस्य ढत्वञ्च निपात्यते । नत्वसिद्धकाण्डस्थढत्वस्येह प्रवृत्तिः ? "दादेर्धातोर्घः" इति घत्वेन बाधात् । नच तेन ढत्वाभावो ढत्वञ्च निपात्यताम् घत्वजश्त्वढलोपास्तु भविष्यन्त्येवेति वाच्यम् ? तथा सति परिदृढय्येत्यत्र "ल्यपि लघु-पूर्वात्" इति णेरयादेशानापत्तेः । पारिदृढी कन्येत्यत्र च ढलोपोऽतिव्याप्तेः । ढलोपस्या-सिद्धत्वेन गुरूपोत्तमत्वादिति भाष्ये स्थितम् ।

यदपि दृंहेरेवेदं निपातनं दृह वृद्धाविति तु प्रकृत्यन्तरम् आगमशास्त्रस्यानित्य-त्वात् तस्येडभावे "वा द्रुह" इत्यत्र "वा" योगविभागात् पक्षे घत्वाभावे ढलोपे च प्रत्युदाहरणमिदन्द्रष्टव्यम् इति तन्न ? उभयोरपि निपातनाभ्युपगमात् । तदाह वामनाचार्योऽपि "अथ दृहिः प्रकृत्यन्तरमस्ति" इति शब्दैः ।

२४—अयमपि प्रश्नः सप्तमप्रश्नाभेदीति ततोऽवगन्तव्यः ।

२५—अयञ्च द्वादशप्रश्नान्तर्भूत एवावसेयः ।

२६—अस्योत्तरमष्टमप्रश्नादनतिरिक्तम् ।

२७—"एकः पूर्वपरयोरि"तिसूत्रे भाष्ये यथाऽनयोः पुत्रयोः कटं कुर्वित्यादौ एक-वाक्यतयैव बोधादेकत्वविवक्षणेन उभयसम्बन्ध्येककटकरणप्रतीतिस्तथा आद्गुणे पूर्व-परयोर्गुण इत्यादावपि द्वन्द्वनिर्देशादित्यादितः सिद्धान्तित इति पर्यन्तशब्दरत्नकेन कथं सिद्धान्तित इत्यस्योत्तरं जातम् । अत्र न्याये मानविषये प्राञ्चः, सुद्ध्युपास्य इत्यादौ यथाऽभावेऽनन्तयकारयकारापत्तौ परिनिष्ठितरूपस्याऽनापत्त्याऽयं कल्पनीय इति ब्रुवते । तच्चिन्त्यम् ? तथा सति धर्मिग्राहकमानेन आनन्त्यापत्तिरूपस्य तदप्रवृत्ता-वपि उद्बोधाभिसन्धानस्यापत्त्यभावेऽपि तन्न्यायसञ्चारपरम्परया विरोधापत्तेः । यदपि "इरयो रे" इति सूत्रे द्विवचननिर्देशो ज्ञापकोऽन्यथैकवचनान्त एव पठिते वारद्वयन्त-त्प्रवृत्तौ दध्रे इत्यस्य सिद्धौ द्विर्वचनमनर्थकमेवेति तन्न ? लक्ष्यविधेयस्य स्वस्मिन्नुद्देश्य-त्वाप्रवृत्तौ तदर्थं तस्यावश्यकत्वात् । किन्त्वत्र "समो वा लोप" इति लोपस्यापि कृप्क-

रणस्थत्वादनुस्वारानुनासिकयोरनचि चेतिसकारस्य वारद्वयमसिद्धत्वे संस्स्कर्तेति द्विस-कारकरूपसिद्धौ "समः सुटि" इतिसूत्रस्यैवात्र ज्ञापकत्वात्।

तल्लक्ष्यत्वञ्च स्वीयप्राथमिकप्रवृत्त्युद्देश्यतावच्छेदकावच्छेदेनाश्रीयमाणसमुदाय-विशिष्टाघटितत्वे सति स्वीयप्राथमिकप्रवृत्तिपूर्वकालिकप्राप्तिविषयाघटितत्वम्। वै च स्वघटकत्व स्वघटकमात्रोद्देश्यकविकारागमभिन्नत्वोभयसम्बन्धेन षट् तु सन्त इत्यत्र स्वीयप्राथमिकप्रवृत्तिविषयपूर्वकालिकप्राप्तिविषयघटितत्वात् तत्त्वाभावः। विशेष्यां-शनिवेशे मानन्तु "न सम्प्रसारणे सम्प्रसारणम्" इति सूत्रमेव। वैशिष्ट्ये द्वितीयस-म्बन्धनिवेशात् विकारागमघटितत्वेऽपि तल्लक्ष्यत्वम्। मात्रपदनिवेशेन काण्डे इत्यत्र ह्रस्ववारणपरभाष्यस्य नासङ्गतिरिति।

२८—"ङमो ह्रस्वात्" इतिसूत्रे ह्रस्वादिति ङमो विशेषणम् ङम इति च ह्रस्वेन सह विशेषणसम्बन्धमनुभूय पश्चादधिकारलब्धपदविशेषणम् अचीति पञ्चम्यर्थे सप्तमी। तथा च ह्रस्वात् परो यो ङम् तदन्तं यत्पदन्तस्मात् परस्याचो नित्यं ङमुडित्यर्थः। नन्वेवम् परमदण्डिनावित्यादौ अन्तर्वर्त्तिविभक्त्या पदत्वे ङमुड् दुर्वार इति चेन्न? उत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणनिषेधादिति प्राञ्चः। नव्यास्तु एतत्प्रा-चीनार्थे परमदण्डिनावित्यत्र ङमुड् दुर्वार एव। नचोत्तरपदत्वे इति प्रत्ययलक्षणाभा-वेनापदत्वात् ङमुड् वारित इति वाच्यम्? माषकुम्भवापेनेत्यत्र "पदव्यवायेऽपि" इति निषेधसिद्धये उत्तरपदस्य कार्यित्व एव तेन प्रत्ययलक्षणनिषेधस्याभिमततया प्रकृते चातथात्वेन प्रत्ययलक्षणस्य दुर्वारत्वात्। ननु त्वन्मतेऽपि दोषापत्तिरिति चेन्न? "अजि च पदे" इत्यतः पदे इत्यनुवर्त्य तदादिविधानात् ह्रस्वात् परो यो ङम् ततः परस्याजादेः पदस्य ङमुडित्यर्थेन निर्वाहात्। ननु कार्यित्वनिवेशस्य न फलं तथा सत्यपि पूर्वदण्डिप्रिय इत्यत्र नलोपार्थम् मध्यमपदत्वानाक्रान्तस्यैवोत्त-रपदत्वस्य भवताऽप्यङ्गीकारात्। तथाच तादृशमध्यमपदत्वम् माषकुम्भवापेनेत्यादा-वपि कुम्भशब्देऽस्त्येव। तथाच निषेधाप्रवृत्तौ प्रत्ययलक्षणेन पदत्वे णत्वनिषेधसिद्धये कार्यित्वनिवेशो विफल इति चेन्न? "सुप्तिङन्तम्" इतिनिर्देशेन वृत्तिविशिष्टत्वम् मध्यमपदत्वम् वै० स्वारम्भकत्वस्वारम्भकावधिकपूर्वत्वस्वारम्भकावधिकोत्तरत्वस-म्बन्धैः। तादृशमध्यमपदत्वस्य पूर्वदण्डिप्रिय इत्यादौ सत्त्वेऽपि केवलकुम्भेत्यस्या-रम्भकत्वाभावेन मध्यमपदत्वाप्रवृत्तौ कार्यित्वनिवेशस्यावश्यकत्वात्। नचैवम् "अत-द्धिते" इतिवार्तिकप्रत्याख्यानावसरे पदे व्यवायः पदव्यवाय इति सप्तमीसमास आदृ-तो भाष्ये। तथाच माषकुम्भवापेन क्षीरपकुम्भेनेत्यादौ फलभेदवारणाय पदपदम् पदत्वयोग्योपलाक्षणिकम् अन्यथा "गतिकारकोपपदानाम्" इत्यनेन सुबुत्पत्तेः प्राक् समासे आद्योदाहरणे पदे परतो व्यवायाभावेन णत्वापत्तिः। तथाच वार्त्तिकारम्भे पदेन व्यवायः पदव्यवायः इति तृतीयासमासेऽन्त्योदाहरणे पदेन व्यवायत्वाभावात् णत्वापत्तिरित्याकारकफलभेदः। तथाच माषकुम्भवापेनेत्यत्र कुम्भेत्यस्य पदत्वयोग्य-

त्वादन्तात् पदत्वनिषेधे सिद्धे कार्यित्वनिवेशो व्यर्थ इति चेन्न ? अटतीत्यटः पचाद्यच्, परमशब्देन कर्मधारये परमाटस्तस्मादाचारक्विबन्तात् क्विपि "तिंघुन्न" इतीण्निषेधे परमाट्निरिक्तस्य पदत्वेन "न पदान्तात्" इति ष्टुत्वनिषेधो भवति । कार्यित्वनिवेशाभावे परमाटटिंति स्यात् अतः कार्यित्वनिवेश आवश्यक इति चेन्न ? वस्तुत उत्तरपदत्वन्न इति वार्त्तिकस्य भाष्ये प्रत्याख्यातत्वात् । तथाहि स्वादिषु इति योगविभज्य "यस्मात् प्रत्ययविधिस्तदादि" इति सुप्तिङन्तसूत्रात् सुबन्तमिति चानुवर्त्त्य स्वादिषु परेषु यस्मात् स्वादिविधिस्तदादि पदसंज्ञं स्यात्, मध्ये चेत्, सुबन्तन्तदपि पदं स्यात्, परमवाचावित्यादौ परमवाचित्यस्य तद्घटकवाचित्यस्य च नानेन पदत्वम् । असर्वनामस्थाने यचि इति द्वितीययोगे यकारादावजादौ सर्वनामस्थाने तत्प्रकृतेः पदत्वन्न, मध्ये चेत्सुबन्तन्तदापि पदन्न इति प्रसज्यप्रतिषेधेन व्याख्यानात् । ततः परमवाचेत्यादौ समुदायस्यावयवस्य च भत्वार्थम् भमिति तृतीययोगेऽसर्वनामस्थाने यचीत्यनुवर्त्त्य यकारादावजादौ सर्वनामस्थाने तत्प्रकृतेर्भत्वन्तद्घटकसुबन्तस्य च, एवञ्च वार्त्तिकस्य कार्यम् । एवञ्च समस्तलेहशब्दादाचारक्विबन्तात् क्वनिपि नव्यमते उत्तरपदस्य कार्यित्वेन वार्त्तिकस्थाने परमलेह्वा, निरुक्तादिशा प्रत्याख्याने तु भत्वाप्रवृत्त्याऽन्तर्वर्त्तिविभक्त्या पदत्वे ढत्वादौ परमलेढ्वेति फलभेदात् ।

तृतीययोगेऽनुवर्त्तमानस्य यकाराद्यजादिभिन्नो यः स्वादिस्तद्भिन्नप्रत्ययमात्रस्योपलक्षणात्वं वाच्यम् । तत्त्वस्य क्वनिपि सत्त्वेन भत्वेन नास्ति फलभेदस्तथाचोक्तरीत्या क्विप्यपि भत्वे परमाट्टिरित्येव साधु । एवञ्च कार्यित्वनिवेशे न किमपि फलम् ।

२९—प्रश्नोऽयमेकादशाभिन्न इति तथैवानुसन्धेयः ।

३०—अयम् प्रश्न एकोनविंशप्रश्नांशेन गतार्थः ।

३१—यथा "तस्यापत्यम्" इत्यत्र सम्बन्धार्थमात्रवाचकप्रकृतिमात्रस्य तस्येत्याद्यनुकरणम् तथौपश्लेषिकाधिकरणबोधकसप्तम्यन्तपदानामष्टाध्यायीघटकानान्तस्मिन्नित्यनुकरणम् ।

एवञ्चौपश्लेषिकाधिकरणबोधकसप्तम्यन्तपदं यत्र तत्र निर्दिष्टे पूर्वस्येत्युपतिष्ठते । निर्दिष्टत्वञ्चाव्यवहितोच्चारणम्, निरित्यस्य नैरन्तर्यार्थकत्वात् दिशेरुच्चारणक्रियत्वात्, यत्र दिग्वाचकसमभिव्याहृतपञ्चम्यन्तन्तत्राव्यवहितपरस्योपस्थितिः । आद्ये अव्यवहितत्वं पूर्वत्वं षष्ठ्यर्थत्वञ्चेति विधेयत्रयम् । अन्त्ये च पूर्वत्ववर्जितम्परत्वसहितन्तद्द्वयम् । इको यणचीत्यत्र पूर्वस्य परस्य च व्यवहितस्याव्यवहितस्य च यणप्राप्तौ पूर्वस्यैवाव्यवहितस्यवेति चाद्येन नियम्यते । अन्त्येन च पूर्वोक्तरीत्या प्राप्तस्याव्यवहितस्यैव परस्यैवेति च नियम्यते । आद्यपरिभाषायास्सत्सप्तम्यन्तेनोपस्थितिः "उभयप्राप्तौ कर्मणि," इति लिङ्गात् । द्वितीयस्यास्तु ल्यब्लोपपञ्चम्यामप्रवृत्तिरिति प्राञ्चः । नव्यास्तु "तस्मिन्" इतिस्वतन्त्रस्य सप्तम्यन्तपदार्थकस्य तच्छब्दस्य निर्देशो न त्वनुकरणम् अन्यथा तस्य स्वरूपमात्रबोधकतया "तस्मिन्नणि" इत्यत्र तदुपस्थि

तावपि "इको यणचि" इत्यत्र सप्तम्यन्तस्योदाहरणदानं न संगच्छते।

ननु तच्छब्दस्यैव तदर्थकत्वे ततः सप्तम्यनुपपत्तिरिति चेन्न? सप्तम्यन्तानामेव तदर्थबोधनाय निर्दिष्टे इत्यनेन सामानाधिकरण्याय न तदुपन्यासात्। जनपदे लुबित्यादौ तु नास्याः प्रवृत्तिरर्थस्योच्चारणाभावात् शब्देन सहाऽव्यवहितपौर्वापर्याभावात् च।

वस्तुतस्तु प्राचीनोक्तमेव युक्तम्। अन्यथा निर्दिष्टे इत्यस्य विधेयत्वे तस्मिन्निति तद्विशेषणत्वे चोद्देश्यदलाप्रसिद्धिः, अविधेयत्वे तु अव्यवहितोच्चारितत्वस्य केनाप्यनभिधानात् सप्तम्यन्तार्थेऽव्यवहितोच्चारिते इत्यर्थासिद्धिश्चेति तत्त्वम्।

३२—अयञ्चाष्टमप्रश्नादेव गतार्थ इति।

३३—अयञ्च अष्टाविंशतितम एव प्रश्नो न भिन्नः।

३४—अयमेकादश एव प्रश्न इति तत एवानुसन्धेयः।

३५—हयवरट् सूत्रे हकारोपदेशः अट् अश् हश् इण् ग्रहणेषु हकारग्रहणार्थः। क्रमशः अर्हेण, देवा हसन्ति, देवो हसति, लिलिहिध्वे लिलिहिढ्वे इत्यत्रोदाहरणं बोध्यम्।

अम्प्रत्याहारे तु फलाभावान्न ग्रहणमिष्टम्। नच बहुपुम् क् ह् इत्यादौ "गविन्ध्यग्राह" इत्यादिवदपदान्तत्वात् कफारादेर्जश्त्वाभावे "पुमः ख्यय्यम्परे" इति रुत्वस्य फलत्वादिति वाच्यम्? "सुट् तिथोः" इत्यादाविकाराद्युच्चारणेन शास्त्राबोधिताजव्यवहितहल्समुदायस्यासाधुत्वबोधनात् साधुत्वमात्रनिमित्तकशास्त्राप्रवृत्तेः।

अत एव "न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि सम्भवति किमुतव्यदास्तादय" इति भाष्यं सङ्गच्छते। "स्कोग्गरित्यादिस्तु सौत्रः प्रयोगः। आर्षे च कुत्रापि अमि हकारप्रयोजनमनुक्तम्।

३६—एतस्योत्तरम्प्रथमप्रश्नान्तर्गतमित्यवसेयम्।

३७—अस्योत्तरम्पञ्चदशप्रश्नोत्तरादभिन्नं सर्वथैव।

३८—अयञ्च प्रश्नो दशमप्रश्नादनतिरिक्त इति तदेवोत्तरमस्य।

३९—अस्योत्तरम् अष्टाविंशतितमेन तुल्यम्।

४०—अयञ्च नवमप्रश्नोत्तरेणोत्तरणीयः।

४१—वाक्यार्थबोधम्प्रति पदार्थज्ञानस्य कारणत्वात् हल्पदार्थज्ञानमन्तरा "हलन्त्य" सूत्रस्य वाक्यार्थो न स्यात् तज्जानञ्च "आदिरन्त्येन" इतिशक्तिग्रहाधीनन्तज्ज्ञानञ्चेत्पदार्थज्ञानाधीनमित्येवम् अन्योन्याश्रये उभयोरपि बोधकत्वाभावे आवृत्तिकरणम्।

ननु हलित्येकदेशस्यैव तन्त्राद्याश्रयेण सिद्धे सूत्रावृत्तिर्व्यर्थेति। तथाहि तन्त्रादिनोपस्थितहल्पदार्थद्वयमध्ये सामीप्यार्थकषष्ठ्याऽन्त्यशब्देन समासे हल्समीपकस्येत्त्वे "आदिरन्त्येन" इति हल्शक्तिग्रहवृत्तेः। इति विनाऽप्यावृत्तिं दोषोद्धारस-

म्भवः । किञ्च तत्रोऽपि लाघवात् हल्‌लकारयोस्समाहारद्वन्द्वे द्वितीयलकारस्य संयोगान्तलोपे पूर्वलकारस्येत्संज्ञां विधाय हल्सिद्धौ "हलन्त्यम्" इत्यस्याभिमतार्थो व्याख्येय इति चेन्न ? ब्राह्मणकम्बल इत्यादौ प्रकरणादिविरहेऽपि स्वस्वामिभावादिप्रतीतिवत् समीपानन्तरादिशब्दमन्तरा षष्ठ्या तदर्थबोधाप्रसक्तौ तत्प्रयोगेऽसामर्थ्याद् षष्ठीसमासाप्रसक्तौ मध्यमपदलोपिसमासे सौत्रसमासाश्रयणे वा गौरवेण तादृशव्याख्यानापेक्षया सूत्रावृत्तेरेव लघीयस्त्वात् । नच "षष्ठी स्थाने" इति सूत्राभावे "अस्तेर्भूः" इत्यादौ अस्त्यादेः समीपादौ भ्वाद्यादेशापत्तिरित्यस्तेरनन्तरे समीपे वेत्यादिना भाष्यकृतोक्तम्, तत्प्रामाण्येन सामीप्यादिरपि षष्ठ्यर्थ इति चेत् ? "षष्ठी स्थाने" इति सूत्राभावीयसमुक्तभाष्ये समीपादिपदाध्याहारेण तदर्थनिरूपितसम्बन्धे षष्ठी, स्थानपदाध्याहारेण तन्निरूपितसम्बन्धार्थिका वा षष्ठीत्यभिप्रायवर्णनेनादोषात् । अत एव गावोऽस्य सन्त्यनन्तरा इति विग्रहे मतुबापादनभाष्यव्याख्यासमये कैयटेनानन्तर्यस्य प्रकृत्यर्थोपाधिवर्णनम्, भाष्यकर्त्तुश्चासामर्थ्यात् तत्र वृत्त्यभाव इति वर्णनञ्च सङ्गच्छेते । आनन्तर्यस्य षष्ठ्यर्थत्वे तु तौ न सङ्गच्छेयाताम् । नच ग्रामकूपो गङ्गातीरमित्यादौ प्रतीतिबलात् सामीप्यं षष्ठ्यर्थ इति शंक्यम् ? लक्षणया तत्प्रतीतिनिर्वाहात् ।

तुल्ययुक्त्या सामीप्यं षष्ठ्यर्थस्स्यादिति च न ? जघन्यवृत्तिकल्पापेक्षया मूलोक्तरीतेरेव युक्तत्वात् सन्न्याय्यत्वाच्च । नच साहित्याभाव इति वाच्यम् आद्यन्तयोरितिवत् हल्पदार्थयोरित्त्वावच्छिन्नेऽन्वयस्वीकारेण तत्सत्त्वात् । इति तु न युक्तम् ? "यथासंख्य" सूत्रारम्भसामर्थ्यात् तत्र तथा कल्पनेऽपि प्रकृते प्रमाणाभावात् । सूत्रप्रणयनान्यथानुपपत्त्या सह वक्तुं वक्तुरिच्छायाः पाणिनेः पूर्वमपि सत्त्वेन साहित्यसद्भावादिति चेन्न ? आचार्यस्य भ्रान्तत्ववारणाय वक्तुरपि श्रोतुरपि च सहपदार्थबोधेच्छया तादृशाचार्येच्छायास्सहविवक्षात्वात् । नच क्वचिदनर्थज्ञम्प्रति स्वाभिमतार्थबोधनेच्छया मुखनयनम्पश्येत्यादिप्रयोगो दृश्यते एव कथम्भ्रान्तिदोषमाशंक्य सहविवक्षान्तरं विधीयत इति वाच्यम् ? अयमुभयज्ञ इत्येवं ज्ञातम्प्रत्येव तत्प्रश्नादुपादानात् इत्यर्थः । प्रकृते च न तादृशकल्पनया तत्प्रयोगः, आचार्येणोपायाकरणात् स्वज्ञातशक्त्यभिप्रायेण तादृशप्रयोगाभावाच्च । अन्यथा तन्त्रान्तरीयप्रथमादिपदशक्त्यनुमानवत् "लट् स्मे" इत्यादौ कैयटोक्तरीत्या लक्षणया वा हल्पदेन व्यञ्जनस्य बोधेऽन्योन्याश्रयाभावेन भाष्याद्युक्ततद्विषयकपूर्वोत्तरपक्षनिर्दलत्वापत्तिः । अत एव "नाऽज्झलौ" इत्यत्र भाष्योक्तवाक्यापरिसमाप्तिरपि सङ्गच्छते । अन्यथा पाणिनेः पूर्वम् तथा ज्ञानसत्त्वेन किन्तेन न्यायेन कृतम् भविष्यति । तस्मात् साहित्याभावेन द्वन्द्वाप्राप्तौ मूलोक्तैव रीतिराश्रयणीया । आद्यव्याख्याया हल् विलेखने इति धातोर्लस्येत्त्वापत्तिः । लित्त्वसामर्थ्याद् देवदत्तहलित्यादौ प्रत्ययात् पूर्वत्वाभावेऽपि "लिति" इति स्वरस्यैव फलत्वात् । नच "हलसीरात्" इतिनिर्देशेन तत्रेत्त्वन्नेति वाच्यम् ?

अनेककल्पनापेक्षया मूलोक्ताऽवृत्तिरेव ज्यायसीति ध्वनना । किञ्च समाहारद्वन्द्वे लस्य संयोगान्तलोपोऽपि न स्यात् यणः प्रतिषेधारम्भात् । तत्प्रत्याख्यानेऽपि 'झलो झलि" इत्यतो झल्ग्रहणमपकृष्य संयोगान्तस्य झलो लोप इति व्याख्यानाच्चेति मनोरमाकृतः ।

वस्तुतस्तु—गिरिर्वेडित्याद्यर्थं योगविभागादिना क्वचित्झलोऽपि लोपविधानेन संयोगान्तलोपे न किञ्चिद् बाधकम् । किन्तु पूर्वोक्तरीत्या समाहारद्वन्द्वोऽनन्तरादिषु न समासोऽनभिधानादित्यादिभाष्योक्तरीत्या च तन्त्रादेः खण्डनमिति संक्षेपः ।

४२—ननु "अणुदित्" सूत्रभाष्ये उच्चारितस्शब्द एवार्थप्रत्यायको भवति नानुच्चारित इति वचनात् इक्पदोपस्थाप्योकारादिभिर्दीर्घादीनां ग्रहणन्न भवेत् इति चेदत्रोच्यते, प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढलक्षणाऽङ्गीकारेणादोषात् । नन्वेवम् प्रत्याहाराणाम् आद्यवर्णेष्वपि लक्षणयैव सिद्धौ व्यर्थमेव ग्राहकशास्त्रम् । नच "अस्य च्वौ" इत्यादौ चारितार्थ्यसम्भवः, व्यक्तिपक्षेऽस्य प्रत्याहारसूत्रस्थलो भेदेनागत्याभावादिति वाच्यम् ? लक्ष्यनिष्ठलक्ष्यतावच्छेदकज्ञानार्थमेव तच्चारितार्थ्यात् । एषा च लक्षणा अविधीयमान एवेति न विधीयमाने "त्यदादीनाम" इत्यादौ प्रवृत्तिः । इत्थञ्चेक्पदेन षट्पञ्चेर्यण्पदेन च सप्तानां ग्रहणे यथासंख्यान्वयासम्भवात् स्थानत आन्तर्यादित्यादिमूलोक्तिसंगतिः । लक्ष्यतावच्छेदकाग्रहाच्च न "नाऽऽज्झलौ" इत्यादौ प्रवृत्तिः । गुणा अभेदका इति सिद्धान्तपक्षाश्रयत्या यणां विधीयमानत्वेन सवर्णग्रहणाभावापादनञ्च निरस्तम् । नच अप्रत्ययग्रहणसामर्थ्याज्जातिपक्षेण गुणानाम् अभेदकत्वेन "तपरस्तत्कालस्य" इतिसूत्रेण वा विधीयमानविषये सवर्णग्रहणस्य निषेध इति सिद्धान्तेन कथं सप्तेति वाच्यम् ? शिवद्रोहे तात्पर्यन्यायेन यथासंख्यान्वयखण्डन एव तात्पर्यावधारणात् । नच लक्ष्यार्थबोधात् पूर्वमावश्यं शक्यार्थबोधमादाय यथासंख्यमस्तु इति वाच्यम् ? एवमपि ऋकारऌकाराभ्यां प्रत्येकं त्रिंशदुपस्थितौ ऌवर्णानां रेफादेशस्य ऋवर्णानां लादेशस्य च प्रसङ्गात् ।

परे तु व्यक्तिपक्षे लक्ष्यतावच्छेदकाग्रहात् लक्षणाभावात् झलादिप्रत्याहारसूत्रेषु सर्वझकारग्रहणस्य दुरुपपादत्वम् । यथासंख्यसूत्रञ्च व्यक्तिसाम्य इव धर्मसाम्येऽपि प्रवर्त्तते । "स्यतासी ऌलुटोः" इव । नच जातिपक्षे "अणुदित्" सूत्रेऽण्ग्रहणप्रत्याख्याने "उपसर्गादृति" इत्यादौ ऋकारेण ऌकारग्रहणाच्च सावर्ण्यवचनस्थाने ऌवर्णस्य ऋवदतिदेशात् ऌकारे रेफापपत्तिरिति वाच्यम् ? हे क्रु २ सशिक्षार्थन्तस्यानित्यत्वकल्पनात् । "ऌवादिभ्य" इत्यादिनिर्देशैः ईषत्सादृश्येनापि ग्रहणमित्यर्थो युक्ततरः। 'आचार्याः कृत्वा न निवर्त्तन्ते' इति न्यायात् "अणुदित्" सूत्रेऽण्ग्रहणप्रत्याहाराद्यवर्णेषु णकारादिभिश्चिह्नैः प्रत्याहारसूत्रस्थोऽयमितिप्रत्यभिज्ञासत्त्वादुपायान्तरम् । अत एव च भाष्येऽत्रत्यमण्ग्रहणम् प्रत्याख्यातम् ।

४३—अत्र "स्थानिवदादेश" इतिसूत्रे आदेशपदेन धात्वङ्गकृत्तद्धिताव्ययसुप्ति-

इत्युपदादेशा इति भावः । तस्य पररूपतानन्वे सिच्युपमादीनां वैयर्थ्यमापद्येत । शानच-
श्चार्धधातुकत्वात् । उपादानसमासत्वेऽकृषदाभ्यामेवमानायेन पृथगव्ययपदात्वानैयर्थ्यापत्तेः
स्थानिना तुल्यं स्थानिवत् "तेन तुल्यमि"ति वतिः । वत्यर्थस्सादृश्यम् तत्र स्था-
निपदार्थस्य प्रतियोगितयान्वयः, सादृश्यस्यादेशे स्वरूपेणान्वयः, तथा च स्थानि-
प्रतियोगिकसादृश्यवानादेशो भवति । अलाश्रयविधौ च न स्थानिवदित्यर्थः ।

नन्वेवमर्थं रामायेत्यादौ दीर्घो न स्यादिति चेन्न ? स्थानिघटकाल्वृत्तिधर्माश्रय-
विधौ न स्थानिवदित्यर्थेनादोषात् । तथापि तादवस्थ्ये स्थानिघटकाल्मात्रवृत्तिधर्मा-
वच्छिन्नोद्देश्यताके विधौ न स्थानिवत्, स्थानिघटकाल्वृत्त्यल्त्वव्याप्यधर्मावच्छिन्नो-
द्देश्यताके विधौ न स्थानिवदित्यर्थेन वाऽदोषात् । प्रदीव्येत्यत्रेड्वारणन्तु स्थानिघट-
काल्वृत्त्यल्त्वव्याप्यधर्मघटितधर्मावच्छिन्नोद्देश्यताके विधौ न स्थानिवत् इत्यर्थेन ।

नन्वेवम् बभूविथेत्यत्रेडनापत्तिरिति चेन्न ? स्थानिघटकाल्वृत्त्यादेशघटकाल्वृत्त्य-
ल्त्वव्याप्यधर्मघटितधर्मावच्छिन्नोद्देश्यताके विधौ न स्थानिवदित्यर्थेनादोषात् ।
न चैवम् बभूवतुरित्यत्रेडापत्तिरिति वाच्यम् ? तथाऽर्थे आदेशाल्वृत्तित्वं विहायादेश-
घटकाल्वृत्तित्वनिवेशेनादोषात् । न चैवम् द्यौःपन्था इत्यादौ सुलोपापत्तिः ? अप्र-
आदेशघटकाल्वृत्तित्वस्यैव तत्र निवेशात् । न चैवम् भूः इत्यत्र सुलोपापत्तिः ?
स्थानिघटकाल्निष्ठाल्त्वव्याप्यधर्मावच्छिन्नोद्देश्यताके विधौ न स्थानिवदित्यभि-
मतेः । वै. च स्ववृत्तित्व स्वविशिष्टाल्वृत्तित्वैतदुभयसम्बन्धेन । अत्र वै. स्वघटितस्था-
निनानिरूपितादेशताश्रयावयवत्वस्वसजातीयत्वैतदुभयसम्बन्धेन । साजात्यञ्च प्रथ-
मत्वद्वितीयत्वान्यतरेण ।

नन्वेवम् निर्जरसेत्यादौ दोषोऽतिदिश्यमानस्थानिघटकाल्वृत्त्यल्त्वव्याप्यधर्म-
घटितधर्मावच्छिन्नोद्देश्यताके विधौ न स्थानिवदितिप्राच्यसिद्धान्तेनादोषात् ।

एवम् प्राचीनार्थे धिन्वन्तीत्यत्र दोष इति अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानि-
रूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मावच्छिन्नोद्देश्यताके विधौ न स्थानिव-
दिति न दोष इति नव्याः ।

न चैवम् वार्तिककृतो "ङ्याब्ग्रहणेऽदीर्घः" इति, सूत्रकृतो दीर्घग्रहणम् "हल्-
ङ्याब्" सूत्रे भाष्ये दीर्घग्रहणप्रत्याख्यानपरप्रश्लेषाश्च विरुध्यन्ते । निष्कौशाम्बिरति-
खट्व इत्यादौ स्थानिवत्त्वाभावेनैव सुलोपाप्राप्तेरिति वाच्यम् ? आरोप्यमाणध-
र्मेण साक्षादवच्छिन्नोद्देश्यताके विधौ नेत्यर्थेन विरोधपरिहारात् ।

केचित्तु उभयमपि संक्षिप्य सिद्धान्तयन्ति अल्विशिष्टविधौ न स्थानिवदिति । वै.
स्ववृत्त्यल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतध-
र्मेण साक्षादवच्छिन्नोद्देश्यताकत्वस्ववृत्त्यल्त्वव्याप्यधर्मघटितातिदिदीक्षितधर्मनि-
मित्तकत्वान्यतरसम्बन्धेन ।

वस्तुतस्तु—धिन्वन्तीत्यत्र "अचः परस्मिन्" सूत्रीयपञ्चमीसमासमूलकदोषस्य हे

गौः इति भाष्योक्तप्रयोगात्तदनित्यत्वकल्पनादेव वारणमिति, बहिरङ्गपरिभाषया वेति प्राचां सिद्धान्तेऽपि न दोष इति तत्त्वज्ञाः ।

४४–सुध्युपास्य इत्यत्र नव रूपाणि पुनर्द्वित्वेन सम्भवन्ति तत्र "यरः पूर्वपरयोः" इति सूत्रभाष्यीयलक्ष्ये लक्षणन्यायात् पुनर्द्वित्वमेवाशुद्धम् । अन्यथा द्वित्वाऽऽनन्त्यापत्तेः । झरो झरीत्यादिलोपानाञ्च वैकल्पिकत्वेन न तथा निर्वाहः । अत एव "लिटि धातोः" इति सूत्रेऽनभ्यासग्रहणम्भाष्यकृता प्रत्याख्यातम् । उक्तरीत्याभिमान भाष्यप्रयोगाच्च तल्लक्ष्ये तल्लक्षणं सकृदेव प्रवर्त्तत इति विकारकृतलक्ष्यभेदानाश्रयणञ्च । अतः परन्तल्लक्ष्यत्वादिपरिष्कारः (२७) सप्तविंशतितमप्रश्नवदनुसन्धेयः ।

४५–एतस्योत्तरं नवमप्रश्न एव दत्तमिति तत एवेदमनुसन्धेयम् ।

४६–पुम् ख्यानमित्यत्र "पुमः खयि" इति रुत्वे प्राप्ते "ख्याञादेशे न" इत्यस्यारम्भः । अत्र भाष्यकृता चक्षिङः ख्शाआदेशं विधाय शस्य यत्वे ख्यानमित्यत्र रुत्वदृष्ट्या यत्वस्यासिद्धत्वेन रुत्वाभावस्साधितः । तथा च फलितार्थएव ख्याञादेश इति । नचेहादेशो दुर्लभः "वर्जने प्रतिषेधः असनयोश्च" इति वचनादिति वाच्यम् ? "बहुलन्तणि" इति बाहुलकात् सिद्धेः । ख्शादित्वप्रयोजनानि च भाष्ये रुविधिः पुंख्यानम् , णत्वे पर्याख्यानम् , निष्ठानत्वमाख्यातम् इत्यादीनि । अत एव सस्थानत्वं नमः ख्यात्रे इति सङ्गच्छते ।

यत्तु ख्याधातुरपि ख्शादिः शस्य यत्वविधिरपि तत्साधारण इतिमाधवादिभिरुक्तन्तत्सर्वथाऽसङ्गतम् । भाष्ये चक्षिङ एवोपक्रमात् , सार्वधातुकेऽपि ख्शादिप्रयोगापत्तेश्च । नचेष्टापत्तिश्शक्यते कर्तुम् ? माधवेनार्द्धधातुकेष्वेवायं ख्शादिरित्युक्तेः ।

तथा च सार्वधातुकेऽनभिधानमेवाश्रयणीयमिति गौरवं स्यात । नच अयन्मते सार्वधातुके ख्याधातोः सार्वधातुकविषयत्वेन प्रयोगस्य निर्बाधतया बहुपुम् ख्यातीत्यत्र रुत्वापत्तिः केन वार्येति वाच्यम् ? अनभिधानात् । संहितायाः अविवक्षणाद्रुत्वाप्राप्तिस्तु केषाञ्चित् । अन्यन्मूले सविस्तरम्

४७—अस्य प्रश्नस्योत्तरम् अष्टादशप्रश्न एव दत्तमिति तत एवानुसन्धेयम् ।

४८—अस्य चोत्तरम् सप्तमप्रश्नैकदेशेन लेख्यम् । तत्रैव चावगन्तव्यम् ।

४९—अत्र एचीत्यनुवर्त्तते तच्च एतेरेव विशेषणन्त्वेधतेरव्यभिचारान्नाप्यूटोऽसम्भवादिति प्राचीनाः । नच एकदेशविकृतन्यायाश्रयणेन मा भवान् प्रेदिधदित्यत्र व्यभिचारस्सम्भव इति । नच प्रकृतिप्रत्ययसम्मोहः ? द्विः प्रयोगो द्विर्वचनं पाष्ठमिति भाष्ये सिद्धान्तात् । अन्यथैव णिलोपो न स्यात् । जिघांसतीत्यत्र सनः सकारेण विशिष्टस्य द्वित्वे कुत्वाभावश्च स्यात् ।

अत्र माधवः—ण्यन्तस्य शब्दान्तरत्वेनोक्तप्रयोगे व्यभिचाराभावात् । अत एव ण्यन्तभादीनामुपसंख्यानम् , शब्दान्तरत्वादप्राप्ताविदमिति कैयटादयः । किञ्च ण्यन्तस्यापि ग्रहणे अभिषावतीत्यत्र ण्यन्तेनाभेर्योगात्सुनोतिम्प्रत्यनुपसर्गत्वात् षत्वा-

भावप्रदर्शनपरत्वेनैव प्रकृत्यर्थविशेषणत्वेन समाहितं भाष्ये । "हेरचङि" इति ण्यधिक-ग्रहणाज्ज्ञापनन्तु विशेषाविरोधेन कुत्वमात्रविषयकम् । अत एव "हेरचङि प्रतिषेधानर्थ-क्यमण्यन्तत्वात्" इति वार्त्तिककृतः । ज्ञापकन्तु चङोऽन्यत्र ण्यन्तेऽपि कुत्वभावस्ये-ति । तस्माच्च कैयटादिभिरुक्तं समीचीनम् ।

कथम् ? विशिष्टस्य तथा शब्दान्तरत्वेऽपि प्रकृतिभागस्येभूपत्वानपहारात् । अत एव "उपसर्गात्सुनोति" सूत्रे "सिद्धन्त्ववयवानन्यत्वात्" इति वार्तिकम् । यदपि अभिषावयतीत्यत्रत्यभाष्यविरोधस्तद्विपरीतमेव, प्रकृतेः सुनोतिरूपानपायात् । स्व-मते तु रूपान्तरत्वेन ण्यधिकस्याग्रहणादसंगत एव स कैयटस्स्यात् । ण्यन्तभादीना-मुपसंख्यानमपि विशिष्टस्य शब्दान्तरत्वेन प्रकृत्यंशस्य तु णिचा व्यवधानेनावश्यकमेव ।

पाठे भाष्यवार्त्तिकयोः "एत्येधत्योः" इति योगं विभज्य एचि इति विशेषित-त्वान्न मे कस्यापि विरोधः । तस्माद् वृत्तिमाधवादयोऽभ्यक्ता एवेति ।

५०—सप्तदशप्रश्नस्योत्तरेणैवायं कृतोत्तर इति न पृथगुत्तरावश्यकतेति ।

५१—अवयवत्वेन बोधकाद्यन्तशब्दाभ्यामवयवी समुदाय आक्षिप्यते । तस्य संज्ञा तत्र प्रयोगाभावादद्वयवेष्वन्यतरन्ती संज्ञा मध्यगेषु विश्राम्यति । नत्वा-द्यन्तयोः संज्ञास्वरूपानतर्भावेन तयोः परार्थत्वाभावात् । स्वरूपसूत्रात् स्वशब्दा-नुवृत्त्या सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शकत्वनियमेन तेनादेरेव ग्रहणात् ।

वस्तुतस्तु ज्ञापकादिनाऽस्यापि संज्ञाकार्यत्वं भवति । आद्यन्तशब्दाभ्यामाद्य-न्तघटितसमुदायस्याक्षेपेण अन्त्येनापि सह गृहीत आसायास्संज्ञायाः प्रकारान्तरेणा-प्राप्यत्वात् । स्वशब्दानुवृत्तेश्च न किमपि फलमस्ति । यथा "अच्च घेः" इत्यत्र गुण-दर्शनेन घिशब्दस्यापि विसंज्ञाबोध्यत्वन्तथैव विशिष्टस्य संज्ञास्वरूपत्वेऽपि प्रत्येकं स्वबोध्यत्वे क्षतिविरहात् । एवमेव अजझलादिसंज्ञा स्वसंज्ञिघटकेकारादिष्विवाकारच-कारयोरपि प्राप्नोत्येव । अथ च स्वशब्देन केवलान्त्यपरामर्श सम्भवत्यपि विशिष्ट परामर्शे किमपि बाधकमवलोक्यते । अतः ज्ञापकादिनैवान्त्यस्य तत्त्वं वारणीयम् । तथाच स्वशब्दानुवृत्तिर्विफलैव ।

५२—अयञ्च प्रश्नः सप्तविंशतितमप्रश्नस्योत्तरांशेनैव विशेषेण समाहितः ।

५३—अस्य च चतुर्थप्रश्नेनैवोत्तरसम्भवस्सम इति ध्येयम् ।

५४—अस्योत्तरमष्टाविंशतितमे प्रश्ने दत्तम् ।

५५—अस्योत्तरम् अष्टादशप्रश्नोत्तरेणैव समवगन्तव्यम् ।

५६—एतस्योत्तरम् त्रयश्चत्वारिंशत्प्रश्नोत्तरेण तुल्यम् ।

५७—"अत्रानुनासिकः पूर्वस्य तु वा" इतिसूत्रमधिकारो विधिर्वेति द्वैते समु-त्पन्नेऽधिकारपक्षे प्रकरणालाभात् अत्रग्रहणमनर्थकं स्यात् । तुशब्दस्तु परस्य नित्यं रुत्वं पूर्वस्य तु वाऽनुनासिक इति विशेषद्योतनार्थः । "अनुनासिकात्परः" इतिज्ञाप-कादेव सिद्धे वाग्रहणं स्पष्टार्थम् । अनुनासिकाभावपक्षस्यान्तरेण विकल्पमसम्भवात् ।

दिव्यत्र स्थानिवत्त्वनिषेधाभावेन "लोपो व्योः" इति वलोपो न भवति । दिवेर्यस्य लोपस्य पदावयवत्वाभावेन "न पदान्त" इति निषेधः । सुबन्तावयवत्वे अन्तर्वर्तिविभक्त्या पदत्वम् । इष्टवदित्यतिदेशमतेन पदत्वबाधस्तु न शङ्क्यो भिन्नाश्रयत्वात् । वर्णाश्रये च निषेधात् प्रत्ययलक्षणमपि न भवति इति मनोरमाकृतः । नच "अचः परस्मिन्" इतिस्थानिवत्त्वेन भत्वं सुलभमिति वाच्यम् ? णिलोपस्येव टिलोपस्यास्थानिवत्त्वापत्तौ वान्ते भत्वस्य दुर्लभत्वेन पदत्वानिवृत्तेः । अयञ्च इष्टवद्भावपक्षोऽपि पन्था न भाष्यादिसम्मत इति प्रातिपदिकात्तद्धितोत्पत्तौ पदत्वाभाव एव । [illegible] कार्यं इति व्याख्याने च इणः शतृप्रत्ययान्तनिष्पन्नयति एतौ यन् इसतीत्यत्र यणः स्थानिवत्त्वेन "एतत्तदोः" इति सुलोपाभाव इति शब्दरत्नकाराः ।

७३—अत्र "अन्तादिवच्च" इति सूत्रे "एकः पूर्वपरयोः" इत्यनुवर्तते यथासंख्यञ्च । अत्र "तद्वच्च" इति न्यासेनैव सिद्धेऽवयवविलाभार्थमन्तादिशब्देन पूर्वपरशब्दयोस्तद्घटितसमुदाये लक्षणया अन्तादिभ्यां वर्णाभ्यामपृथगवस्थिताभ्यां ये व्यवहाराः प्रत्ययत्वादयस्ते एकादेशविशिष्टस्यापि भवन्तीत्यर्थस्सम्पन्नः । एवञ्च समुदायवृत्तिधर्मस्यानेनातिदेशेऽपि वर्णमात्रवृत्तिधर्मस्यानतिदेशात् अधीत्येत्यादौ तुगर्थं क्रियमाणं "षत्वतुकोः" इत्यत्र तुग्ग्रहणञ्चरितार्थम् । अत एव वर्णमात्रवृत्तिधर्मातिदेशासम्भावनया प्रवृत्तमपि "वर्णाश्रये विधावन्तादिवद्भावप्रतिषेधः" इति वार्तिकम् "न वाऽताद्रूप्यातिदेशात्" इति भाष्येण खण्डितं युज्यते । ननु ताद्रूप्यनाम वर्णमात्रवृत्तिधर्मस्तस्यानेन नातिदेश इत्यर्थस्वीकारे खट्वाभिरित्यत्रादन्तत्वस्य खट्वावृत्तितया वर्णमात्रवृत्तित्वाभावेन तदापाय "अतो भिस" इति स्यात् नच अतः परस्याङ्गसंज्ञाजनकस्य भिस ऐसित्यर्थे तत्रादन्तत्वस्य वर्णमात्रवृत्तितया तत्रातिदेशात् न दोष इति वाच्यम् ? तथापि खट्वावान् इत्यत्र "अत इनिठनौ" इतीनिठनोर्दुर्वारत्वात् अदन्तत्वस्य चातिदेशे बाधकाभावात् ( समुदायवृत्तित्वादित्यर्थः ) इति चेन्न ? स्ववृत्तित्वस्वस्थानिकादेशवृत्तित्वोभयसम्बन्धेन वर्णविशिष्टधर्मत्वस्य ताद्रूप्यतया प्रकृतेऽदोषात् । एवञ्च स्थानिवत्सूत्रेणैव सिद्धे नेदमारम्भणीयमिति प्राञ्चः ।

क्षीरपेणेत्यत्र पूर्वान्तवद्भावेन एकाजुत्तरपदत्वमादाय "एकाजुत्तरपदे णः" इति णत्वं सिध्यति । तत्र स्थानिवत्त्वेन न निर्वाहस्तत्त्वस्यालविधित्वात् । यद्यपि तत्रैकाच्त्वस्य स्वतस्सिद्धत्वमुत्तरपदत्वस्य च स्थानिवत्त्वे न बाधस्सुकर इति न दोषः । तथापि भिय इत्यत्रेकारप्रश्लेषेण पूर्वान्तवत्त्वेन धातुत्वमादायेयङ् सिध्यति । स्थानिवत्त्वेन तु न निर्वाहः स्थानिन इकारस्य धातुत्वाभावात् । नच आनुमानिकस्थानिवद्भावेन तत्र धातुत्वं सुलभमिति वाच्यम् ? स्वास्वैरीत्यत्र स्वाशब्दे स्वत्वे "स्वादीरेरिणोः" इतिवृद्ध्यापत्तेः । ननु स्वाशब्दे स्वत्वेऽपि ततः स्वशब्देन व्यवधानान्नोक्तापत्तिरिति चेन्न ? तथा सति दोषाभावकल्पनेऽपि "उभयत आश्रयणे नान्तादिवत्" इति वचनस्यासिद्धत्वापत्तेः । तत्रोभयत आश्रयणे न स्थानिवदिति न शक्-

मशक्यम्? उभयत आश्रयणेऽपि प्लायत इत्यत्र स्थानिवद्भावस्येष्टत्वादिति नव्याः। वस्तुतस्तु तत्र वचने स्थानिवत्पदेन स्थानिवत्सूत्रस्यैव ग्रहणेन "अचः परस्मिन्" इति स्थानिवद्भावः प्लायत इत्यादौ स्यादेवेति न कश्चिद्दोष इति प्राचीनमतमेव श्रेयः। स्थानिवत्सूत्रेण गतार्थता चास्य युक्तैव।

७४—अस्योत्तरमेकपञ्चाशत्तम प्रश्ने एव दत्तमनुसन्धेयम्।

७५—"भूवादयो धातवः" इतिसूत्रे स्वादिग्रहणाभावे हिरुक् पृथक् इत्यादिअव्ययानाम् क्रियासमानाधिकरणत्वाल्लिंगसंख्याद्यनन्वयित्वाच्च क्रियावाचिनां धातुत्वेऽप्रातिपदिकत्वेनापदत्वात् हिरुक् कृतं इत्यादौ "तिङ् तिङः" इति निघातापत्तिः। नच अव्ययेषु पाठसामर्थ्यात् पदत्वमविरोधमिति वाच्यम्? हिरुकुदित्यादावकजर्थम् पाठसार्थक्यात्। नचैषां क्रियान्तराकाङ्क्षितत्वेन क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्मवत्त्वरूपक्रियावाचकत्वाभावेन न दोष इति वाच्यम्? एवं सति शिश्ये इति भावे 'तिङन्तघटकैकारस्य क्रियावाचकत्वेन धातुत्वप्रयोज्य "आदेच उपदेशे" इत्यात्वापत्तेः। नच षष्ठाध्याये प्रकृते सूत्रे धातुग्रहणासम्बन्ध उक्तो भाष्ये इति न तद्धातुत्वनिमित्तम्, किञ्च आशितीतिप्रसज्ज्यप्रतिषेधेऽपि शित्परत्वयोग्यस्यैवात्वविधानादात्वप्रसक्तिः। अन्यथाऽऽर्धधातुकक्रियावाचकत्वेन धातुत्वग्रहणे वा नोक्तदोष इति वाच्यम्? आणपति वट्टयतीति भाष्योक्तप्राकृतभाषाप्रयोगयोरेव धातुत्वेन शास्त्रविषयतया साधुत्वापत्तेरिति संक्षेपः।

७६—एतस्योत्तरं पञ्चिंशप्रश्नोत्तरेण समवगन्तव्यम्।

७७—अयञ्च प्रश्नः 'गोरग्रवचनमिति" प्रतीकीकृत्य तृतीयप्रश्नोत्तरे एव समाहितः।

७८—अयञ्च प्रश्नः षोडशप्रश्नोत्तरैकदेशीति तत एव समाधेयः।

७९—एतस्य चोत्तरम् एकचत्वारिंशत्प्रश्नोत्तरेण समम्।

८०—अयञ्च द्वासप्ततिप्रश्नोत्तरेण समाधेयः।

८१—ननु "सर्वत्र विभाषा गोः" इति सूत्रे एङ्ग्रहणानुवृत्त्या एङन्तस्य गोशब्दस्यात्ति परे प्रकृतिभाव इत्यर्थे चित्रग्वग्रमित्यत्र प्रकृतिभावे वारितेऽपि हे चित्रगोऽग्रमित्यत्र दोषस्तदवस्थ एवेति। नच प्रतिपदोक्तपरिभाषया निर्वाहः? तस्या वर्णग्रहणेऽप्रवृत्तेः। अत एव "आदेच उपदेशे" इति उपदेशग्रहणञ्चरितार्थः। अन्यथा चेता स्तोता इत्यादौ लाक्षणिकत्वादेचामात्ववारणे तदर्थं क्रियमाणोपदेशग्रहणवैयर्थ्यापत्तेः। नच गोभ्यामोऽग्रामित्यादावात्ववारणाय तदिति चेन्न? लिटि धातोः इति सूत्राद्धातुसम्बन्धादात्ववारणात्। नच "ओत्" सूत्रस्थभाष्यविरोधः तथाहि तत्र अथन्ते अहोऽभवदित्यत्र "ओत्" इति प्रगृह्यत्वमाशंक्य "ओतश्चित्प्रतिषेधः" इति वचनमारब्धम्। तस्य च प्रतिपदोक्तपरिभाषया प्रत्याख्यानमपि कृतम् इति वर्णग्रहणे लाक्षणिकपरिभाषाया अप्रवृत्तिस्वीकारे तदसंगतं स्यादिति वाच्यम्? तद्ग्रे भाष्ये गोऽभवदित्यत्र गौणमुख्यन्यायेन प्रगृह्यत्ववारणेन तद्भाष्यस्यैकदेश्युक्तित्वात्। एवञ्च

हे विष्णो अत्रमितिप्रकृतिभावो दुर्वार इति चेन्न? तत्रैङ्ग्रहणमनुवर्त्यावर्त्यं च प्रतिपदोक्तस्यैङ आवृत्त्याऽदोषादिति प्राञ्चः। नव्यास्तु "आदेच उपदेशे" इति तृतीयोपदेशग्रहणेन लाक्षणिकपरिभाषाया अनित्यत्वमात्रं ज्ञाप्यते न तु सामान्यतो ग्रहणे तदप्रवृत्तिरिति। अत एव ओत्सूत्रभाष्यं च संगच्छते। एवञ्च दोषवारणसम्भवे नावृत्त्यादिक्लेशो विधेय इति वदन्ति।

८२—अस्योत्तरमेकोनपञ्चाशत्प्रश्नोत्तरेण तुल्यम्।

८३—ननु धातृ अंश इति स्थिते यणादौ "यणो मय" इति वार्त्तिकेन रेफस्य द्वित्वं कुतो नेति चेन्न? द्वित्वप्रकरणे रहाभ्यामिति रेफस्य निमित्तत्वश्रुत्या द्विर्वचनविधौ तस्य कार्यित्वबाधात्। नन्वेवं निमित्तभूतरहातिरिक्तत्वस्य वार्त्तिके सङ्कोचेऽपि "अनचि च" इत्यत्र तथा कल्पने मानाभाव इति चेन्न? रेफस्य परसवर्णानुनासिकद्विर्वचनप्रतिषेधो वक्तव्य इति वार्त्तिकप्रत्याख्यानभाष्येण "नेमौ रहौ कार्यिणौ" इत्यादिना सामान्यतो रेफे द्विर्वचनमात्रस्य कार्यित्वबाधात्। अन्यथा वचनारम्भे द्विर्वचनमात्रस्य प्रत्याख्याने च "अचो रहाभ्याम्" इतिमात्रस्येति फलभेदसत्त्वेन प्रत्याख्यानानापत्तेः। नचैवं रेफनिष्ठनिमित्ततायाः तत्कार्यित्वव्याप्यत्वाभाव इति वाच्यम्? [illegible] रेफस्य निमित्तत्वमत्रैव "अनचि च" इति प्रवृत्त्या व्याप्यव्यापकभावलाभात्।

नचैवमपि "इको यणचि" इति सूत्रे इग्निष्ठस्थानितायां अज्निष्ठनिमित्ततायां सङ्कोचे सुद्ध्युपास्य इत्यादौ यण् न स्यादिति वाच्यम्? प्रकृते "तस्मादित्युत्तरस्य" इति निर्देशेन तथा सङ्कोचस्य बाधात्। नच जातिपक्षे उक्तज्ञापकत्वस्य सम्भवेऽपि व्यक्तिपक्षे यावल्लक्ष्यं लक्षणस्योपप्लुतत्वात् सुद्ध्युपास्यार्थं क्रियमाणेन "इको यणचि" इत्यनेन सामर्थ्याद् निमित्तेन कार्यित्वसङ्कोच इति न ज्ञापकत्वोपयोग इति वाच्यम्? अपवादशास्त्रस्य पर्यालोचनया श्रीश इत्यादिविषयकयणशास्त्राभावकल्पनवदत्रापि सुद्ध्युपास्यार्थं तदुपप्लुतलक्षणाभावस्यैव वाच्यत्वे बाधापत्त्या ज्ञापकत्वस्य व्यक्तिपक्षेऽपि युक्तत्वादिति प्राञ्चः। वस्तुतस्तु शाब्दबोधीयसङ्कुचितविषयतायां व्याप्यव्यापकभावमादायैव बाध्यबाधकभावः। एवञ्चाजव्यवहितपूर्वत्वविशिष्टेग्निष्ठकार्यितायास्तदव्यवहितपरत्वविशिष्टाज्निष्ठनिमित्ततायाश्च वैयधिकरण्येन व्यापकत्वाभावे तत्त्वाप्रवृत्तौ न ज्ञापकत्वोपयोगः। ननु तक्रकौण्डिन्यन्यायेन बाधप्रवृत्तौ ज्ञापकत्वोपयोग इति चेन्न? तत्प्राप्तियोग्यविषयाभावरूपानवकाश एव तन्न्यायप्रवृत्तौ प्रकृते मध्वत्रेत्यादौ सावकाशत्वप्रदर्शनेन तदप्रवृत्तेः। न चायमनवकाशत्वरूपहेतोरभावादत्र न प्रवर्त्ततेऽपि तु विधेयविषये तत्प्रवृत्तिस्वीकारात् अत्राविधेयत्वादिति वाच्यम्? अपूर्वज्ञानोविषयत्वेन निमित्तत्वादेरपि विधेयत्वात् इति नव्याः।

अत्रेदञ्चिन्त्यम्—यत्र बाध्यबाधकत्वेनाभिमतशास्त्रीयविषयतयोर्व्याप्यव्यापकभावस्तत्रैव तक्रन्यायः प्रवर्त्तते। अत एवादिवृद्धिरन्त्योपधावृद्धी बाधते अनुशातिकादिषु

कृत्वस्सज्ज्ञकस्य पदादिति भाष्ये सामर्थ्योपवर्णनं अंगवकृते तत्कार्यायमाहरपरिशेषण- न्यायविचारो भाष्यवशादिकृतप्रभादिप्रकोतोऽवगेयः ।

८४—अस्य पञ्चमप्रश्नेन सहाभेदात्तथैवोत्तरम् ।

८५—अस्योत्तरमेकचत्वारिंशत्तमेन तुल्यम् ।

८६—अस्य चैकोनपञ्चाशत्तमप्रश्नोत्तरेणोत्तरम् ।

८७—अयञ्च प्रथमप्रश्नसम इति तथैवोत्तरणीयः ।

८८—अस्य च समाधिर्द्वितीयप्रश्नवद् बोध्यः ।

८९—एतस्योत्तरमष्टमप्रश्ने दत्तमिति ततोऽवसेयम् ।

९०—एकचत्वारिंशत्तमेन तुल्योऽयम् ।

९१—प्रथमप्रश्नेन समानमुत्तरणीयोऽयम् ।

९२—अयं सप्तविंशतितमप्रश्नवत्समाधेयः ।

९३—अयञ्च प्रश्नश्चतुर्थपञ्चमप्रश्नौ सङ्कलय्य तथैव समाधेयः ।

९४—'विसर्जनीयस्य सोऽशर्परे" इति न्यासे "वा शरि" इति सत्वस्य विकल्पस्य विधानादपि "कुप्वोः" इत्यत्र शर्परे इत्यनुवृत्त्या तयोः शर्परेऽप्रवृत्तावपि "कुप्वोः" इति सूत्रे चाद्विसर्गोऽनाकाङ्क्षया । अतः परं षट्चत्वारिंशत्तमेन प्रश्नेनैव षोडशप्रश्नेनैव च संक्षेपतः समाधेयम् ।

९५—एकषष्टितमेनैव सप्तदशप्रश्नेनैव च संक्षेपतोऽस्य समाधिरुचितः ।

९६—अस्योत्तरञ्च पञ्चत्रिंशत्प्रश्नानन्तरं संक्षेपत एकचत्वारिंशत्तमप्रश्नोत्तरञ्चानुगतीकृत्य देयम् ।

९७—अस्योत्तरम् ८३ प्रश्नोत्तरेण कर्त्तव्यम् ।

९८—एतदुत्तरञ्चतुर्थप्रश्नेनैवविधेयम् ।

९९—"अचः परस्मिन् पूर्वविधौ" इत्यत्र पूर्वविधाविति पदे समासद्वयसम्भवः, पूर्वस्य विधिः-पूर्वस्मात् परस्य वा विधिरिति रीतेः ।

प्रत्यै पिपठिष्यादौ दोषवारणाय (यथोक्तसिद्धये) पञ्चमीसमासस्स्वीक्रियते परन्तु पचिगणय्येति भाष्योदाहरणात् हे गौरिति भाष्योदाहरणाच्च पञ्चमीसमासोऽनित्य इति सर्वैरपि स्वीक्रियते ।

एवञ्चैतत्पक्षीयफलानामन्यथैव सिद्ध्या न किञ्चिदेतन्मात्रप्रयोजनम् । अतोऽधिकमुच्यमानमपि शब्दरत्नमनोरमायां लेखाभावात् छात्रैः किंलेख्यमिति विभावयन्तु प्रष्टार एवानभिज्ञाः ।

१००—अस्य प्रश्नस्योत्तरं सप्तमप्रश्नोत्तरवद् बोध्यमिति ।

१०१—एतस्य द्वासप्ततिप्रश्नसमत्वात् तथैवोत्तरमिति न पृथग् वैलक्षण्यमवसेयम् ।

१०२—अस्योत्तरम् त्र्यधिकाशीतितमेन ८३ प्रश्नोत्तरेणैव गतार्थमनुसन्धेयम् ।

१०३—अस्योत्तरम् नवमप्रश्नवद् विधेयम् ।

१०४—अस्योत्तरम् सप्तदशप्रश्नवद् विधीयतामन्यथेति ।

१०५—ननु सुधी उपास्य इत्यत्र "सम्प्रसारणाच्च" इति पूर्वरूपमुकारस्य कुतो नेति चेन्न ? सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणवचनात् । नच समासे कृते समस्तादुत्पन्नप्रत्ययनिमित्ताङ्गत्वमादाय तथापि दोष इति वाच्यम् ? सम्प्रसारणनिमित्तप्रत्ययनिमित्ताङ्गसंज्ञावद्घटकेऽचि पूर्वमित्यर्थेनादोषात् । नचैवम् प्रकृते निवर्तितेऽपि सुच्युतमित्यत्र दोष इति वाच्यम् ? सम्प्रसारणविशिष्टेऽपि पूर्वरूपविधानेनादोषात् । वै० स्वाव्यवहितोत्तरत्वस्वाघटिताङ्गाघटकत्वोभयसम्बन्धेन । नचैवं सुधियावित्यत्र तदापत्तिः ? स्वघटिताङ्गघटकत्वमिति तृतीयसम्बन्धदानेन क्षतिविरहात् । नचैवमपि सुधियः पुत्र इतिसमासे षष्ठ्या आक्रोशेऽलुकि ङसोऽकारस्य पूर्वरूपापत्तिरिति वाच्यम् ? यत्राज्विशिष्टसम्प्रसारणन्तत्रेत्यर्थेनादोषात् वै० स्वाव्यवहितपूर्वत्वस्वाघटिताङ्गाघटकत्वोभयसम्बन्धेन ।

वस्तुतस्तु–जीन इत्यादौ सम्प्रसारणे जि आन इत्यत्र सम्प्रसारणपूर्वत्वेऽपि "हल" इतिसूत्रारम्भात् तत्रेकारे पूर्वरूपोत्तरमपि सम्प्रसारणत्वबुद्धावपि दीर्घ [illegible] तद्बुद्धौ प्रमाणाभाववदत्र पूर्वरूपानन्तरं सम्प्रसारणत्वबुद्धेरभावादुकारस्य । पूर्वरूपत्वशङ्कैव नास्तीति सर्वोऽपि प्रपञ्चोऽनयो व्यर्थ एव ।

१०६— चित्रगवीणामिति "कुमति च" इति णत्वम् इति शब्दरत्नग्रन्थः । नन्वत्र "कुमति च" इत्यस्यासिद्धत्वेन "एकाजुत्तरपद" इति णत्वं वक्तव्यम् । नच "कुमती" ति तस्यापवाद इति वाच्यम् ? हरिकामिण्यावित्यादौ "एकाजुत्तरपदे" इत्यप्राप्तिविषये तच्चारितार्थ्येन तत्त्वाभावात् । नच प्रकरणे प्रकरणमसिद्धमिति सिद्धान्तान्न दोष इति वाच्यम् ? ओश्चिन्धीत्यादौ "विभाषा भवत्" इत्यस्य "नश्छव्यप्रशान्" इतिदृष्ट्याऽसिद्धत्वाभावेन परत्वात्तेन रुत्वेऽनुनासिकापत्तेः । नच "समासान्ताः" इत्यत्र समासपदस्योत्तरपदपरत्वेन टच उत्तरपदावयवत्वादेकाजुत्तरपदत्वाभावेन तत्प्राप्तिः उत्तरपदावयवत्वादेव च द्विपुरीत्यादावदन्तोत्तरपदकत्वात् स्त्रीत्वसिद्धिरिति वाच्यम् ? "अन्त" इति सूत्रस्थभाष्यप्रामाण्येन "समासान्ता" इत्यत्र समासपदस्वारस्येन च समासावयवत्वस्यैव भाष्यसम्मततया एकाजुत्तरपदकत्वे बाधकाभावात् । अत एव पञ्चराजमित्यत्र नपुंसकत्वसिद्धिरन्यथाऽकारान्तोत्तरपदत्वा "दकारान्तोत्तरपदो द्विगुरि"ति स्त्रीत्वापत्तेः । द्विपुरीत्यादिसिद्धिस्तु "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इतिभाष्येण लिङ्गस्य लौकिकत्वाद् बोध्या । लिङ्गस्य लौकिकत्वादेव द्विनावमिति सिध्यति । अन्यथा परवल्लिङ्गत्वेन स्त्रीत्वं स्यात् ।

किञ्च समासान्तानामुत्तरपदावयवत्वेऽकारान्तोत्तरपद इत्यत्रोत्तरपदग्रहणमनर्थकं स्यात् इति चेन्न ? असिद्धत्वस्य कार्यार्थतया यत्र फले विशेषस्तत्रैव "पूर्वत्रासिद्धम्"

## मनोरमाशब्दरत्नयोः स्वादिसन्ध्यन्तभागे अङ्काः ।

१९४६

सूचना—पञ्चैव प्रश्नाः समाधेयाः । तृतीयपञ्चमषष्ठाश्चावश्यकाः ।

१ 'हलित्येकदेशस्यैव तन्त्रावृत्त्येकशेषान्यतममस्तु' इति मतं मनोरमोक्तदिशा निरस्य तस्मिन् पक्षे समास्य क्लिष्टत्वमुपपाद्य 'अस्तेरनन्तरे समीपे वा' इति भाष्यतः षष्ठ्याः सामीप्याद्यर्थत्वं कथं न प्रतीयते तत्सप्रमाणमुपपादयत । ...१०

२ 'पूर्वत्रासिद्धम्' इति सूत्रे कार्यासिद्धत्वशास्त्रासिद्धत्वयोरन्यतरपक्षे दोषानुपपाद्य सिद्धान्तपक्षं समर्थ्य 'तौ सत्' इति निर्देशेन देवदत्तहन्तृहतन्यायस्यानित्यत्वं किं नेति सुस्पष्टम्प्रतिपादनीयम् । ...१०

३ 'न पदान्त' सूत्रे 'पदान्तस्य स्थाने विधौ न' इत्यर्थकरणे को दोषस्तमभिधाय सिद्धान्तसम्मतमर्थं सोपपत्तिकमुपपाद्य 'णाविष्ठवत्' इत्यतिदेशेनातिदिष्टभत्वस्य णिनिमित्तत्वे वर्णाश्रयत्वं कथं शब्दार्थातिदेशयोरुभयोरपि पक्षयोः सुस्पष्टमुपपादनीयम् । ...१०

४ 'अवङ् स्फोटायनस्य' इति सूत्रे प्रतिपदोक्तस्य एङो ग्रहणे बीजमुपपाद्य 'अकृतव्यूह' परिभाषाऽभावे 'सेदुषः' इति रूपं कथं सिद्ध्येत्तदुपपादनीयम् १०

५ 'उदःस्था–' सूत्रे प्राचीनमतखण्डनावसरे 'जश्त्वम्प्रति अवसाने चर्त्वस्यापवादत्वात्' इत्युच्यते, तद् प्राचीनमतोपपादनपूर्वकमुपपाद्य जश्त्वे कृते चर्त्वस्य चारितार्थ्येन निरवकाशत्वाभावादपवादत्वं कथं तत् भाष्यप्रामाण्यप्रदर्शनपुरःसरं सदृष्टान्तमुपपादयत । ...१०

६ व्यपदेशिवदेकस्मिन्' इत्यस्याः परिभाषाया ज्ञापकम्फलञ्चोपपाद्य व्यपदेशिवद्भावस्य प्रातिपदिके निषेधस्वीकारे प्रमाणम्प्रदर्श्य च शब्दलक्षणाविरत्यत्र दृष्टसाहचर्यसम्बन्धस्याभिधानियामकत्वे 'द्वित्रिश्चतुरिति–' इत्यत्र 'द्वित्रिभ्यां सुजन्ताभ्यां साहचर्याच्चतुःशब्दोऽपि सुजन्त एव' इत्यत्र मानम्प्रदर्शनीयम् । ...१०

७ स्वादिसन्ध्यन्तमनोरमाशब्दरत्नभागे प्राचीननवीनयोर्मतभेदस्य स्थानिवत्सूत्रातिरिक्तमुदाहरणद्वयं भवद्भ्यस्तं सुस्पष्टमुपपादनीयम् । ...१०

# मनोरमाशब्दरत्नयोः स्वादिसन्ध्यन्तभागे प्रश्नाः ।

१९४७

सूचना—पञ्चैव प्रश्नाः समाधेयाः । तृतीयश्चापरिहार्यः ।

१ 'हल् च लृच' इति समाहारद्वन्द्वेन हलन्त्यमिति सूत्रार्थं सम्पादयन् प्राचीनः कां युक्तिमवलम्ब्य निरस्यते ।

(क) 'करिष्यमाणशक्तिग्रहोपायकपदस्य तदभिप्रायेण पूर्वमप्रयोगः' इत्यर्थं भाष्यसम्मतिः प्रदर्शनीया ।

(ख) 'योगभाष्यकारमते उपदेशता उपदेशकरणता । सञ्ज्ञात्वे तु उपदेशता उपदेशशब्दत्वम्' पक्षद्वयेऽप्यर्थभेदः सम्यगुपपादनीयः ।...१०

२ 'भूवादयो धातवः' इति सूत्रे वाग्रहणाभावे 'याः पश्यसि' इत्यादौ आकारलोपवारण[illegible]प्रतिपदोक्तपरिभाषाभ्यां कथमसम्भवीत्युपपाद्य वार्तिककृन्मते दोषान्तरानुधावनप्रयोजनं विवेचनीयम् ।

(क) 'कालेऽपि धात्वर्थ एवेति न क्रियावाचकत्वहानिः' इति । सन्दर्भानुसारमत्रत्यः पङ्क्तेराशयो विशदं वर्णनीयः ।

(ख) 'तद्धि अनैमित्तिकं धातुत्वनिमित्तकञ्चेति स्पष्टमेव' इत्यत्राऽऽत्वस्याऽनैमित्तिकत्वं धातुत्वनिमित्तकत्वं च वदतो विरोधः परिहरणीयः । ...१०

३ व्यूढोरस्केनेत्यत्र सकारस्य स्थानिवत्त्वेनाद्त्वेऽपि स्वरूपतोऽद्भिन्नत्वात् णत्वनिषेध उपपद्यत एवेति कथमनल्विधावित्यस्य प्रत्युदाहरणं सङ्गच्छते ?

(क) 'द्युकामः' इत्यत्र 'सामान्यातिदेशे विशेषानतिदेशः' इति न्यायात् हल्त्वातिदेशेऽपि वकाराभावाद्धलि लोपाप्राप्तिरिति प्रत्युदाहरणासङ्गतिः परिहरणीया ।

(ख) उपलक्षणमेतत् । स्थानिरूपोऽपीति बोध्यम्' इत्यस्याशयम्प्रदर्शयन्नल्विधावित्यस्य सर्वसम्मतोऽर्थः सफलः प्रदर्शनीयः । ...१०

४ ननु 'शिवायोम्' इत्यादौ पररूपेण शुद्धौकारसम्पादनार्थमावश्यकत्वेऽपि रूपग्रहणस्य चिन्त्यप्रयोजनत्वं वदतो मनोरमाकारस्याशयः सप्रमाणमुपपादनीयः ।

(क) प्राच्छींतीत्यत्रान्तवद्भावेन पदान्तरेफस्य विसर्गवारणाय शब्दरत्नकृदुक्तिः प्रसाधनीया ।

(ख) खट्वाभिरित्यत्र पूर्वान्तवद्भावेनादन्तत्वादैस कथं न ? ...१

५ "अत्रानुनासिकः पूर्वस्य तु वा" इति सूत्रे 'अयमधीकारो विधिर्वेति द्वैतम्' इति मनोरमाग्रन्थो व्याख्येयः सिद्धान्तपक्षश्च नव्योक्तः प्रदर्शनीयः । ...२

६ "इदुदुपधस्य चाप्रत्ययस्य" इति सूत्रव्याख्यायां शब्दरत्नकृता 'तमादप्रत्ययपदं तत्सम्बन्धिपरमित्युच्यते' इत्युक्तम् । एतादृशव्याख्यानस्य प्रयोजनं सप्रपञ्चमुपपादनीयम् ।

(क) 'मातुः कार्यम्' इत्यत्र ऋकाराकारयोर्जायमानस्यैकादेशस्य प्रत्ययसम्बन्धित्वादेव षत्ववारणं भवतामभिमतं नवेति सुस्पष्टमुपपादनीयम् ।

(ख) 'मातुः कार्यम्' इत्यत्र मनोरमाभिप्रायेण षत्वाभावः प्रसाधनीयः । १

७ 'विभाषा भवद्भगवत्' इत्यादि वार्तिकमावश्यकं नवेति मतभेदप्रदर्शनपुरःसरं विविच्य 'विभोरिदम्' इत्यादौ "भोभगो" इति सूत्राप्रवृत्तिरुपपादनीया ।

(क) "दृढः स्थूलबलयोः" इत्यनेनेड्भावे ढत्वे च निपातिते ढ्लोपे पूर्वस्येति सूत्रस्थाणः प्रत्युदाहरणप्रसङ्गे 'दृढः' इत्युक्तिः प्राचाङ्कथमसङ्गतेति प्रदर्शनीयम् ।

(ख) 'आहार्यभावारोपादित्यर्थः' पङ्क्तिरियं व्याख्येया । ...१

---

मुद्रकः—विद्याविलास प्रेस, बनारस सिटी । २......

# सिद्धान्तकौमुदी जेबी-गुटका

सूत्रसूची-धातुसूची-सूत्रांक-वार्तिकांक सहित

सम्पादकः—पण्डित गोपाल शास्त्री नेने

सिद्धान्तकौमुदीका ऐसा सुन्दर जेबी गुटका का मनोहर संस्करण यह प्रथम बार ही छपा है। प्रति दिन सिद्धान्त कौमुदी की आवृत्ति करना विद्यार्थियोंके लिये आवश्यक है। सुबह-शाम घूमते-फिरते समय तथा परदेश-यात्रा करते समय विद्यार्थियोंका बहुत ही समय व्यर्थमें व्यतीत होजाता है। अब जहाँ कहीं जाना हो इस संस्करण को जेब में रख लीजिये और जब चाहें सिद्धान्तकौमुदीकी आवृत्ति किजीये 3)

# वृत्तरत्नाकरः

भट्टनारायणभट्टीयव्याख्या सहित सुविस्तृत टिप्पणी व 'मणिमयी' भाषा टीका विभूषित।

विस्तृत भाषा टीका से परिवर्धित इस द्वितीय संस्करण से परीक्षार्थी विद्यार्थियों की सारी कठिनता दूर हो जायगी। नारायणभट्टीय व्याख्या के साथ २ सुविस्तृत टिप्पणी होने पर ही प्रथम संस्करण संस्कृत संसार में विशेष स्थान पाचुका था, पर इस बार मणिमयी विस्तृत भाषा टीका होने से तो यह द्वितीय संस्करण अत्यधिक परीक्षोपयोगी हो गया है। 3)

## वृत्तरत्नाकरः

'मणिमयी' भाषा टीका सहित।

केवल छन्दोज्ञानके लिये यही लघु संस्करण सर्वोत्तम साधन है। इसकी विस्तृत भाषाटीकामें झटिति छन्दोज्ञानकराने का अगाध प्रयत्न किया गया है ॥)

# प्रौढमनोरमा

शब्दरत्न-ज्योत्स्ना-कुचमर्दिनीव्याख्या, प्रभा-विभा टिप्पणीसहिता

उपर्युक्त परीक्षोपयोगी टीका टिप्पणियों से अलङ्कृत यह अभिनव सस्ता संस्करण १-३ भागों में प्रकाशित किया गया है, जिससे विद्यार्थियों को इस विकट समयमें विशेष अर्थ-संकट उपस्थित न हो। इन टीकाओं की प्रशंसा करना सूर्य को दीपक दिखाना है। अत्यल्पमात्रान्त 4)

---